435 गर्जितं मेघनिर्घोषो रसितस्तनितादि च ।
अह्नि घनस्थगिते स्याद् दुर्दिनमन्तर्धिनिह्नवौ व्यवधा ॥
अन्तर्धाव्यवधानप्रावरणस्थगनगूहनास्तरणम् ।
अपिधानं तिरोधानं विधानमपवारणम्[1] ॥
अन्तर्धानं प्रो[1]र्णवनं तू[2]त्थनच्छादने अपि ।

* इति श्रीवत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
मेघाध्यायः पञ्चमः ॥



# ६

## शब्दाध्यायः

शब्दध्वाननिनादनादनिनदस्वानस्वना निस्वन-
440 ह्रादारावविरावघोषरवसंरावारवाश्च ध्वनिः ।
निःस्वानोऽपि रणोऽपि च प्रतिनिनादे स्यात्प्रतिश्रुत् स्त्रियां
संभोगे मणि[1]तं ध्वनिर्वसनपर्णानां स्व[2]नो मर्मरः ॥
भेर्या नादष्ट[1]ट्टरो बर्हिणानां केका [2]हम्भा स्याद्गवां [3]रम्भणं च ।
हेषा[1] ह्रेषा[2] वाजिनां वारणानां शब्दे गर्जा गर्जितं बृंहितं च ॥

---

438. 1. A. om. 1. 438. 439. 1. A. प्रोन्तवनं for प्रोर्णवनं; 2. A. तूद्धनु°, D. तूच्छन° for तूत्थन°. * BCD. इति शब्दारत्नाकरे मेघाध्यायः पञ्चमः for इति श्रीवत्स° ॥ 441. 1. BD. मणित for मणितं; 2. A. स्वरो, C. रवो for स्वनो. 442. 1. A. टड्डुर for टट्टर ; 2. BD. भम्भा, C. हुम्भा for हम्भा ; 3. B. टम्भणं, C. जृम्भणं for रम्भणं. 443. 1. A. हेहा, C. हेला for हेषा; 2. D. भ्रेष for ह्रेषा.

घोणाशब्दे घो[1]रितं घोटकादेस्तिर्यक्छब्दे वाशनं वाशितं च ।
445 विस्फारः स्यात्कार्मुकाणां रथानां चीत्कारः स्याच्छिञ्जितं भूषणानाम् ॥

वृकाणां रेष[1]णं रेषा भषितं [2]भुक्कितं शुनाम् ।
क्रन्दनं योधि[1]संरावे स्रोतसां खर[2]कस्वनः ॥
पर्दनं पायुजे शब्दे कर्दनं कुक्षिकूजिते ।
कोलाहलः कलहलो मा[1]र्जना मुरजध्वनिः ॥
450 निक्वाणो नि[1]क्वणः क्वाणः[2] प्रक्वाणः प्रक्वणः क्वणः ।
वीणायाः क्वणिते शब्दे [1]तुमुलं भृशसंकुले ।
उच्चैःस्वरो ध्वनिस्तारः कलस्तु मधुरास्फुटः ॥
453 मन्द्र[1]स्त्वत्यन्तगम्भीरस्त्रयोऽमी तद्वति त्रिषु ।

❋ इति वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे शब्दाध्यायः षष्ठः ॥

——:❋:——

---

446. 1. C. रोषणं रोषा for रेषणं रेषा; 2. A. C तु शुनां ध्वनिः, बुक्कितं शुनाम् for भुक्कितं शुनाम्. 447. 1 AB. रोदनं रावे, D. रोदनारावे for योधिसंरावे; 2 A खरके स्वनः, B. करखस्वनम् for खरकस्वनः. 449. 1. A भूर्जना for मार्जना 450. 1. A. विक्वणः for निक्वणः; 2 D. माणः प्रकाण प्रकणः for 450[b]. 451. 1. B. तुमूलं for तुमुलं. 453. 1. B. मन्द्रं, D. मन्त्रं for मन्द्रः. ❋ BCD. इति शब्दरत्नाकरे शब्दाध्यायः षष्ठः ॥ for इति वत्सकुल°

# ७

## कालाध्यायः

कालस्तु समयोऽनेहा दिष्टः सूक्ष्मस्तु स त्रुटिः ।
अष्टौ तु ता[1] निमेषस्तौ लिप्तिका स्यादमूर्नव ॥
काष्ठा तास्तु कला त्रिंशत् तास्तु त्रिंशत् क्षणोऽथ ते ।
षण्णाडी घटिका ते तु मुहूर्तः पुंनपुंसके ॥
ते तु त्रिंशदहोरात्रः [1]सुप्रातः शोभनोषसि ।
प्रभातः [1]प्रत्युषः काल्यविभातोषांस्यहर्मुखम् ॥
व्युष्टं प्रत्यूषगोमगौ प्रगे प्रातश्च न त्रिषु ।
दिनाह्नी तु घस्रो वा [1]षण्डौ दिवसवासरौ ॥
समानौ प्राह्णपूर्वाह्णौ समौ संगतसंगवौ[1] ।
मध्यंदिनं तु मध्याह्नोऽथांशोऽह्नः कुतपोऽष्टमः ॥
चरमाह्नस्तु सायाह्नोऽपराह्णः सायमव्ययम् ।
त्रिसंध्यं[1] प्राह्णमध्याह्नापराह्णा मैथिलस्त्वयम् ॥
प्रदोषः स्याद्रात्रिमुखमथ संध्या पितृप्रसूः ।
रात्रिस्तु वासतेयी [1]रजनितमीशर्वरीतमस्विन्यः ॥
क्षणदाक्षपात्रियामावसति[1]श्यामानिशानिशीथिन्यः ।
विभावरी यामिनी च तमिस्रा तामसी निशा ॥

---

455. 1. BD. निमेषस्तु:, C. निमेषा: स्यु: for निमेषस्तौ. 458. 1. A. सुप्रातं, B. सुप्रातं, D. संप्रातं for सुप्रात:. 459. 1. AB. प्रत्यूष: for प्रत्युष:. 461. 1. A. षण्ढौ, C षण्डे for षण्डौ. 462. 1. B. संगमौ for संगवौ. 465. 1 A. त्रिसंध्या for त्रिसंध्यं. 467. 1. AB. रजनी for रजनि. 468. 1. AB स्यामा for श्यामा.

ज्यौत्स्नी चन्द्रिकया धौता गणरात्रं निशागणः ।
या पक्षाभ्यामिवाहो'भ्यां युक्ता सा पक्षिणी निशा ॥
सर्वैकदेशसंख्यातसंख्याशब्देभ्य उत्तरा ।
रात्रिः पुमानदन्तः स्यादह्नोऽप्यह्नः क्वचिद्भिदा ॥
निशीथः स्याद'र्धरात्रो मध्यरात्रो महानिशा ।
समौ यामप्रहरकौ प्रतिपत्पक्षती समे ॥
निपक्षतिर्द्वितीया स्याद् भूतेष्टा तु चतुर्दशी ।
स्त्रीपुंसे तु तिथिः पौर्णमासी पूर्णा च पूर्णिमा ॥
कलोनेऽनुमतिः पूर्णे राका सा रजनीकरे ।
अमावास्या' त्वमावस्या स्यादमावास्यमावसी ॥
अप्यमामास्यमामस्यौ दर्शः सूर्येन्दुसंगमः ।
सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः ॥
पक्षोऽर्धमासः स द्वेधा पूर्वापरवि'भागतः ।
पूर्वस्तु शुक्लः कृष्णः स्यादपरो 'बहुलोऽपि सः ॥
क्षीयमाणतिथिः पक्षो रिक्तः स्यादपरस्त्वणिः ।
मासस्त्रिंशदहोरात्रस्तस्य भेदाः स्युरुत्तरे ॥
चान्द्रः सौरः सावनश्च नाक्षत्रश्च चतुष्टये ।
मासौ चैत्रादिकौ द्वौ द्वावृतुरेते तु षट् समाः ॥

---

471. I. B. इहोभाभ्यां for इवाहोभ्यां. 474 I. C. अहोरात्रो° for अर्धरात्रो°. 479. I. C. अमावस्या त्वमावास्या for अमावास्या त्वमावस्या. 482. I. AC. विभेदतः for विभागतः. 483. I. C. बहुलश्च for बहुलोऽपि. 484. I. A. त्विणिः; C. त्वणी D. स्वनिः for त्वणिः.

उत्तरं दक्षिणं यानमुष्णांशोरयने उभे ।
चैत्रादयः फाल्गुनान्ता मासा द्वादश [1]वत्सराः ॥
तुल्यरात्रिंदिवे काले विषुवद्विषुवे समे ।
चित्रायुक्ता [1]पौर्णमासी चैत्री यत्र स नामतः ॥
मासश्चैत्रो यथैवं स्युर्वैशाखप्रमुखाः परे ।
चैत्रे मधुश्चैत्रिकोऽथ वैशाखे राधमाधवौ ॥
ज्येष्ठे तु शुक्र आषाढे शुचिः श्रावणिके नभाः ।
श्रावणोऽथ प्रोष्ठपदभाद्रभाद्रपदास्त्रयः ।
नभस्ये स्युरिषस्त्वाश्वयुज आश्विन इत्यपि ॥
अमी ऊर्जः कार्तिकिकः कार्तिको बहुलः समाः ।
मार्गस्तु मार्गशीर्षः स्यादाग्रहायणिकः सहाः ।
पौषस्तैषः सहस्यश्च तपा माघेऽथ [1]फाल्गुनः ॥
स्यात्तपस्यः फाल्गुनिकः सान्ता ये [1]तेऽत्र न स्त्रियाम् ।
वसन्ते तु मधुः पुष्पसमयः सुरभिस्त्रयः[1] ।
मरुवक[1]कर्णिकारबकुलाम्रमधूकतुष-
क्रमुकनमेरुसालतिलकागुरुदन्तशठाः ।
कुरवक[1]सिन्धुवारकृतमालतमालयुगच्छद-
करकप्रियालघननागसमित्तरवः ॥

---

489. 1. A. वत्सरः for वत्सराः. 491. 1. A. पूर्णमासी for पौर्णमासी. 499. 1. A. फाल्गुने for फाल्गुनः. 500. 1. C. एतेऽत्र for ये तेऽत्र. 501. 1. B. सुरभिः स्त्रियः, C. सुरभिः स्त्रियाम् for सुरभिस्त्रयः. 502. 1. BD. कुरवक for मरुवक. 503. 1. CD. सिन्दु for सिन्धु.

लवङ्गः[1] पुण्ड्रकोऽशोक इत्याद्याः पुष्पिणो मधौ ।
स्त्रीणां गीत्या प्रियालो विकसति तिलको वीक्षणात्सिन्धुवारः
श्वासाद्धासान्नमेरुः कुरवकतरुरालिङ्गनादङ्घ्रिसंगात् ।
कङ्के[1]लिश्चूतशाखी करपरिमिलना[2]च्चम्पकः शीथुरागात्
संलापात्कर्णिकारो वदनमधुरसासेकतः केसरोऽपि ॥
निदाघ उष्णको ग्रीष्म उष्ण ऊष्मागमस्तपः ।
क्रमात्प्रावृट् च वर्षाश्च स्त्रीत्वैकत्वबहुत्वयोः ॥
प्रावृषेण्यं त्रिषु प्रावृड्भवं प्रावृषिकं त्रिषु ।
त्रिषु मेघं[1]करं मेघविधायिनि शरत् स्त्रियाम् ॥
हिमकालस्तु हेमन्तः शिशिरः पुंनपुंसके ।
समाः स्त्रियः शरत्स्त्री स्यादस्त्रियौ वर्षहायनौ ॥
संवत्सरो वत्सरोऽब्दः कृताद्यं तु चतुर्युगम् ।
त्रियुगं तु युगासारो व्यायोगस्तु युगद्वयम् ॥
अहोरात्रस्तु पैत्रः स्यान्मासेनाब्देन दैवतः ।
ब्राह्मो युगसहस्राभ्यां दैवताभ्यां नृणां तु तौ ॥
कल्पौ[1] मन्वन्तरं दिव्ययुगानामेकसप्ततिः ।
परिवर्तस्तु संवर्तः प्रलयो भूतसंप्लवः ॥

504. 1. AD. लवङ्ग for लवङ्गः. 506. 1. A. कङ्केली, D. कङ्केल for कङ्केलि°; 2. A. °चण्डिकाः सिन्धुरागात् for चम्पकः शीथुरागात्. 510. 1. AC. मेघकरं for मेघंकरं. 517. 1. AB. कल्पो for कल्पौ.

क्षयो [1]युगान्तः कल्पान्तः [2]समस्वापो जगत्क्षयः ।
नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको लयः ॥
नित्यश्च सर्वभूतानां प्रलयोऽयं चतुर्विधः ।

इति वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
कालाध्यायः सप्तमः* ॥

——:※:——



## चित्ताध्यायः

चेतश्चित्तं हृदयमनसी स्वान्तहृन्मानसानि
प्रज्ञा बुद्धिः प्रतिपदुपलब्धिः प्रतीतिर्मनीषा ।
दृष्टिः संविच्चिदपि धिषणा चेतना शेमुषी धी-
र्ज्ञप्तिः प्रेक्षा मतिरपि गतव्यापिनी धीः स्मृतिः स्यात् ॥
चित्तस्याविकृतिः सत्त्वं विकृतेः कारणे सति ।
मानसं कर्म संकल्पो मेधा धीर्धारणावती ॥
मीमांसा गणना चर्चा संख्योत्प्रेक्षा विचारणा ।
अध्याहारः परामर्शस्तर्क ऊहोऽथ कोविदः ॥
विद्वान्सूरिर्लब्धवर्णो विपश्चित्प्राज्ञो धीरः पण्डितः प्राप्तरूपः ।
धीमान्कृ[1]ष्टिर्दीर्घदर्शी कविर्ज्ञो दोषज्ञः सन् दूरदर्शी मनीषी ॥

---

519. 1. A. मानान्तः for युगान्तः; 2. BD. समस्वापौ, C. समः स्वापो for समस्वापो°. * AC. समाप्तः for सप्तमः. 529. 1. C. °तुष्ठः for कृष्टिः.

अभिरूपः सुधीर्बोद्धा बुधो बिन्दुर्विचक्षणः ।
विशारदश्च संख्यावान् आर्य उत्प्रेक्षकश्च सः ॥
आकारः सत्त्वजो भाव [1]आकूतं चेङ्गितं समे ।
आगूः संवित्प्रतिज्ञा च [1]संगरः संश्रवाश्रवौ ॥
अङ्गीकारोऽभ्युपगमो नियमश्च प्रतिश्रवः ।
आधिर्ना मानसी पीडा समाधिर्धर्मचिन्तनम् ॥
विचिकित्सा तु संशीतिर्विशयः संशयः समौ ।
संदेहद्वापरौ चाथ सर्गो निर्णयनिश्चयौ ॥
चित्तविभ्रम उन्मादो मिथ्याज्ञानं मतिभ्रमः ।
अथ सिद्धान्तराद्धन्तकृतान्तसमयाः समाः ॥
स्याद् द्रोहचिन्ता [1]व्यापादः [2]संकेतसमयौ समौ ।
धियो गुणास्तु शुश्रूषा श्रवणं ग्रहणं धृतिः ॥
ऊहो[1]ऽपोहोऽर्थविज्ञानं तत्त्वज्ञानमिति क्रमात् ।
स योगो यस्तु संयोगो जीवात्मपरमात्मनोः ॥
मुक्तिर्निर्वाणकैवल्यब्रह्मनिःश्रेयसामृतम् ।
मोक्षोऽपवर्गः सत्त्वोऽस्त्री प्रधानं प्रकृतिः स्त्रियाम् ॥
आत्मा क्षेत्रज्ञपुरुषौ निदानं [1]त्वादिकारणम् ।
निमित्तं कारणं बीजं हेतुरर्थ उपधिवत्[1] ॥

---

532. 1. A. आकृतं त्वेङ्गतं D. आकतं चे°, C. आकृतिश्चे° for आकूतं चेङ्गितं. 533. 1. BD. संगमः for संगरः. 540. 1. A. व्यापारः for व्यापदः; 2. A. संकेतः समयः for संकेतसमयौ. 542. 1. A. ऊहापोहे, C. ऊहापोहा. D. ऊहोपोहा for ऊहोऽपोहो°. 546. 1. A. चादि° for त्वादि°. 547. 1. A. तत् for °वत्.

णिधानं प्रसंख्यानं ध्यानं सत्त्वं रजस्तमः ।
गुणा[1]स्तत्त्वं प्रकृत्याद्यमविद्या स्यादहंमतिः ॥
चेतसोऽलंक्रिया मैत्री करुणा मुदितापि च ।
उपेक्षा च चतस्रोऽमूर्दम इन्द्रियनिग्रहः ॥
धारणा ब्रह्मणि ध्येये चित्तस्य स्थिरबन्धनम् ।
समाधिस्तु समावस्था जीवात्मपरमात्मनोः ॥
ब्रह्मत्वं ब्रह्मसायुज्यं ब्रह्मभूयं समं त्रयम् ।
धर्मोऽस्त्री सुकृतं श्रेयः पुण्यं सुचरितं वृषः ॥
भाग्यं दिष्टं भागधेयं दैवं च नियतिर्विधिः ।
श्वःश्रेयसं तु कल्याणं श्वोवसीयं शिवं शुभम् ॥
मङ्गलं भावुकं भव्यं भविकं भद्रमद्रके ।
कुशलं[1] शोभनं श्रेयः शस्तं च क्षेममस्त्रियाम् ॥
पुण्यपापे त्रिषु द्रव्ये तद्वच्छिवशुभादि च ।
प्रमोदमोदप्रमदसंतोषामोदसंमदाः ॥
मुत्प्रीतिर्हर्ष आनन्दाह्लादानन्दथवः सुखम् ।
शर्म शातमलिङ्गे शमयस्तु शुभदो विधिः ॥
स्त्र्य[1]र्थस्य [2]श्रैष्ठ्यवादिन्यौ मतल्ली च मचर्चिका ।
प्रकाण्डं तल्लजोद्घौ च प्रशस्तार्थाभिधायकाः ॥

---

549. 1. BCD. गुणाः सत्त्वं for गुणास्तत्त्वं. 559. 1. A. आशवं for कुशलं. 564, 1. B. स्त्र्यर्थ्यस्य for स्त्र्यर्थस्य; 2. श्रेष्ठ for श्रैष्ठ्य.

दुष्कृतमघमेनोऽहः किल्बिषमलदुरितपापरेपांसि[1] ।
दुष्कर्म कलुषरजसी [1]वृजिनं पाप्मा तु पुंसि पङ्कोऽस्त्री ॥
शब्द[1]स्पर्शरसा रूपं गन्धश्च विषया अमी ।
इन्द्रियार्था इन्द्रियं तु स्यादक्षं करणं च तत् ॥
विषयेन्द्रियं हृषीकमथ ज्ञानेन्द्रियं मनः ।
श्रुतिस्त्वग्रसना दृष्टिर्नासाथ चरणौ करौ ॥
उपस्थं वागपानं चेत्येतत्कार्मणमिन्द्रियम् ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रानि धातवः ॥
गन्धे[1] परिमलामोदौ सौरभ्यं सौरभोऽस्त्रियाम् ।
घ्राणतर्पणगन्धे तु कषायः सुरभिः कटुः ॥
मनोज्ञगन्धे[1] सुरभिगन्धिरुच्छ्रितगन्धिनि ।
उद्गन्धिरिष्टगन्धी तु सुगन्धिर्विस्रमित्यदः[1] ॥
आमगन्धिनि दुर्गन्धिः[1] पूतिगन्धिरमी त्रिषु ।
कषायाद्यास्तद्वदर्था अग्न्युत्पात उपाहितः ॥
उत्पातो[1]पप्लवारिष्टो[2]पसर्गा उपलिङ्गकम् ।
अजन्यमीतिरित्येते शब्दाः सप्त समार्थकाः ॥

---

566. 1. A. °रेफांसि for रेपांसि. 567. 1, BD. व्रजिनं for वृजिनं. 568. A. शब्दः स्पर्शो रसो रूपं for 568a. 574. 1. A. गन्धपरिमलामोदाः for गन्धे परिमलामोदौ 576, 1. A °गन्धः for °गन्धे. 577. 1. A. इत्यथ for इत्यदः. 578. 1. B. दुर्गन्धि, C. दुर्गन्धी for दुर्गन्धिः. 580. 1. C. उद्घातोप° for उत्पातोप° 2. B. अरिष्टा उपसर्गोपलिङ्गकौ, D. अरिष्टा उपसर्गोपलिङ्गकौ for अरिष्टोपसर्गा उपलिङ्गकम्.

कषाये[1] तुवरः स्वादौ मधुरो लवणः कटुः ।
अम्लस्तिक्तो रसाः पुंसि षडेते तद्वति त्रिषु ॥

इति *वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
चित्ताध्यायोऽष्टमः ॥



# ९

## पातालाध्यायः

पातालमधोभुवनं बलिसद्म रसातलं च फणिलोकः ।
५८५ अतलं वितलं [1]नितलं सुतलं प्रतलं तलातलं[2] भेदाः ॥
कुहरं तु रन्ध्रविवरछिद्रबिलश्वभ्ररोकनिर्व्यथनम् ।
अपि सुषिवपे स्त्रियौ स्यादवटो गर्तश्च भूतलश्वभ्रे ॥
तिमिरं तमस्तमिस्रं ध्वान्तं क्लीबेऽपि चान्धकारः[1] स्यात् ।
अवतमसमन्धतमसं संतमसं त्वयिणि भूयसि ततेऽस्मिन् ॥
सर्पः पृदाकुभुजगाहिभुजंगभोगि-
590 कुम्भीनसोरगभुजंगमगूढपादाः ।
व्यालद्विजिह्वफणिजिह्मगदन्तशूक-
काकोदराण्डजसरीसृपकाद्रवेयाः ॥

---

582. 1. AC. कषायस्तु for कषाये तु ❀ BCD. om. वत्सकुलवामनभट्टबाणविरचिते. 585. 1. A. सुतलं नितलं for नितलं सुतलं; 2. AC. तलं च तद्भेदाः, for तलातलं भेदाः. 588. 1. A. °कारं for °कारः.

विषधरचक्रिबिलेशयदर्वीकरदीर्घपृष्ठदन्दशूकवशाः ।
पन्नगपवनभुगाशीविषकुण्डलिनागलेलिहानाश्च ॥
शेषोऽनन्तो वासुकिरहिराडथ[1] शङ्खतक्षकाश्वतराः ।
कम्बलगुलिकस्वस्तिक[1]कर्कोटकशङ्खचूड[2]कौरव्याः ॥
वैशालेय[1]महान्तकपद्ममहापद्मनहुषधृतराष्ट्राः ।
कुञ्जरकुमुदैरावतकुण्डोदरपुण्डरीकबहुकुण्डाः ॥
कैलासैलापत्रश्वेतमुखाः स्युर्भुजंगमप्रवराः ।
फणिनः कुण्डलचक्रे वेष्टनमाशीस्तु दंष्ट्रायाम् ॥
डुण्डुभः पुण्डरीकश्च राजिलो राजिमत्यहौ ।
रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशलक्षणाः ॥
फणिनः शीघ्रगतयः सर्पा दर्वीकराभिधाः ।
मन्दा दीर्घा मण्डलिनो विविधैर्मण्डलैर्युताः ॥
मालुधानो मातुलाहिरलगर्दो[1]ऽम्बुपन्नगः ।
अही[1]रणोऽहिर्द्विमुखो राजसर्पो भुजंगभुक् ॥
स भुजंगस्त्वजो नाम यः स्यादुभयतोमुखः ।
गोनसस्तु [1]तिलित्सः स्याद्वाहसोऽजगरः शयुः ॥
वलाहकस्तु कृष्णाहि[1]रन्धाहिरवनीशयः ।
दर्वीकरादिभिर्भेदैरशीतिः सर्पजातयः ॥

---

594. 1 C. अधि° for अथ 595. 1. D. कार्कोटक for कर्कोटक; 2. A. चूडोदवहाः for चूडकौरव्याः. 596. 1. C. महात्मक for महान्तक. 604. 1. AC. गर्तो° for गर्दो°. 605. 1. A. अहं रणो°, C. अभीरणो°, D. आहीरणो° for अहीरणो°. 607. 1. AD. तिलिट्सः for तिलित्सः. 608. 1. A. अलाही° for °अन्धाहि°.

वर्षाभूः [1]शकलज्योतिः पैङ्गराजो[2] बलाहकः ।
शुकपत्रः[1]पुष्पको[2]ऽहिपताको[3] निर्विषाहयः ॥
निर्मुक्तोऽहिर्विमुक्तत्वगहि[1]निर्लयनी [2]स्त्रियाम् ।
समौ कञ्चुकनिर्मोकौ स्फटायां तु फणः फणा ॥
गतिर्भुजो भुजंगस्य भोगस्तु फणकाययोः[1] ।
त्रिष्वाहेयं त्वगस्थ्यादि व्यालग्राह्यहितुण्डिकः ॥
गरलं तु विषं क्ष्वेलस्तत्प्रभेदास्तु दारदः ।
सौराष्ट्रिको ब्रह्मपुत्रो वत्सनाभः प्रदीपनः ॥
शौक्लिकेयो महाघोषः शृङ्गी चेत्येवमादयः ।
त्रयः क्लीबे च काकोल[1]कालकूटहलाहलाः[2] ॥
हालाहलो [1]हालहलो हालहालोऽपि [2]न स्त्रियाम् ।
विषवैद्यो जाङ्गलिको विषविद्या तु जाङ्गलम् ॥
नदी पुरी च नागानां भोगवत्यथ कर्दमः ।
पुमान्निषद्वरः शादो जम्बालः पङ्कमस्त्रियाम् ।
अर्णव उदधिरुदन्वानब्धिरकूपार आपगानाथः ।
वरुणालयमकरालयवाराकरसिन्धुसागरसमुद्राः ॥

---

610. 1. A. शकुल°, C. शिकुल° for शकल°; 2. B. पैङ्गलाजो for पैङ्गराजो. 611. BD. शुकः पुत्रः, for शुकपत्रः; 2. A. पुष्टतःऽही, B. पुष्पिकोऽहिः, D. पुष्पितोऽहिः for पुष्पकोऽहि॰; 3. B. °पताका for °पताकः. 612. 1. A. om lines 612-614; 2. D. अहिर्निलयिनी for °अहिनिर्लयिनी. 614. 1. C. °देहयोः for °काययोः. 619. 1. A. काशूल for काकोल; 2. A विलहुलः for हलाहलाः. 620. 1. C. हालहालः°, D. हलहलः for हालहलः°; 2. BD. हलाहलः, A. हि न स्त्रियाम् for °ऽपि न स्त्रियाम्.

रत्नाकरः पयोराशिः पारावारः पयोनिधिः ।
सर'स्वानूर्मिमाली च तत्प्रभेदाः स्युरुत्तरे ॥
लवणेक्षुसुरासर्पिर्दधिक्षीरोदकात्मकाः ।
अम्भःपुष्करवारितोयजलवाःपाथोवनार्णःपयः-
पनीयोदकमेघपुष्पसलिलक्षीराम्बुनीरामृतम् ।
कीलालं भुवनं कबन्धकमले तज्जीवनं शम्बरं
नारः पुंसि कमव्यये घनरसो नापस्तु भूम्नि स्त्रियाम् ॥
तरङ्गो भङ्ग ऊर्मिर्वा स्त्री 'वीचिर्लहरी समे ।
गुरुषूल्लोलकल्लोलौ तनुषूत्कलिकोर्मिषु ।
कूलं रोधः प्रतीरं त्रिषु तटमुदधेस्तोयवृद्धौ च कूले
वेला द्वीपस्तु न स्त्री तटमधिसलिलं न द्वयोरन्तरीपम् ।
पारावारे तु तीरे परमितरदुमे पात्रमन्तस्तयोः स्या-
दावर्तश्चक्रमम्बुभ्रम उदधिकफः पुंसि डिण्डीरफेनौ ॥
पूरः स्यादम्भसां वृद्धिरोघः स्रोतोऽम्भसां 'स्रुतिः ।
स्फूर्जथुर्वीचि'विक्षेपे पुलिनं सैकतं समे ॥
वालुका स्त्री स्त्रियां भूम्नि सिकताः सिकतावति ।
त्रिषु देशे 'सिकतिलं भ्रमाः' सलिलनिर्गमाः ॥
परीवाहो जलोच्छ्वासः प्रभवो मूलमम्भसाम् ।
चक्राणि' पुटभेदाः स्युर्बुद्बुदस्थासकौ समौ ॥

---

627. 1. A पयस्वान् for सरस्वान् 631 1. A. वीची लहरी, BC. वीचिलहरी for वीचिर्लहरी. 635. 1. A. प्लुतिः for स्रुतिः. 636. 1. D. वीथि° for वीचि°. 638. 1. BD. भ्रमास्तु जलनिर्गमाः for भ्रमाः सलिलनिर्गमाः. 640. 1. A. वक्राणि for चक्राणि.

समुद्रीयं[1] तु त्रिष्वब्धिभवे सामुद्रिकस्त्वयम् ।
समुद्रयात्रादैवज्ञो नौस्तरिस्तरणिः स्त्रियाम् ॥
नौदण्डः क्षेपणी नावमतिक्रान्तेऽतिनु त्रिषु ।
नौतार्ये त्रिषु नाव्यं स्यान्नौभृङ्गे मङ्गमस्त्रियाम् ॥
अर्धनावं तु नावोऽर्धं कूपको गुणवृक्षकः ।
सेचनं[1] सेकपात्रं स्यादरित्रं केनि[2]पातकः ॥
अभ्रिः स्त्री काष्ठकुद्दालः कर्णधारस्तु नाविकः ।
काष्ठाम्बुवाहिनी द्रोणी[1] नियामः कर्णधारकः ॥
कर्णः पृष्ठस्थितारित्रमुडुपं प्लवकोलकौ ।
यानपात्रं प्रवहणं पोतो भेदे तरण्डकः ॥
सांयात्रिकः पोतवणिक् पोतवाहा नियामकाः ।
आतरस्तरपण्यं स्यात्कूपकास्तु विदारकाः ॥
पौलिन्दा[1]स्तु जलाजीवा जालिको दासधीवरौ ।
कैवर्तो जालमानायः पवित्रं शणसूत्रकम् ॥
कुवेणी मत्स्यधानी स्याद् बडिशं[1] मीनवेधनम् ।
उद्दालो मत्स्यबन्धः स्याद्वराटस्तु कपर्दकः ॥
मत्स्यझषानिमिषाण्डजपृथुलोम[1]विसारशकुलि[2]मीनाः स्युः ।
वैसारिणोऽथ शकलं[1] शल्कमुलूपं च तत्त्वचि त्रितयम् ॥

---

641. C सामुद्रियं, D समुद्रियं for समुद्रीयं. 646. 1 B. om. ll. 646 and 647; 2. D. केनिपातनम् for केनिपातकः. 648. 1. AC. द्रोणिः for द्रोणी. 653. 1. BCD. पुलिन्दास्तु for पौलिन्दास्तु. 655. 1. AB. बलिशं for बडिशं. 657. 1. BD. विसारि for विसार; 2. B. शकुल for शकुलि. 658. 1. ABD. शकुलं for शकलं.

राजीवमकर[1]मद्गुरवागुर[2]पल्लव[3]कशकुलशालाश्च ।
नन्द्यावर्तकरोहितकुलिशप्रमुखाश्च मत्स्यभेदाः स्युः ॥
तिमिस्तिमिंगिलः भृङ्गी त्रीरल्लश्च महाझषाः ।
शफरः शफरी प्रोष्ठी गण्ड(डी?)कः शकुलार्भकः ॥
महाङ्गाः क्रूरहृदयाः यादांसि जलजन्तवः ।
सहस्र[1]दंष्ट्रपाठीनौ शिशुकोलूपिनौ समौ ॥
नलमीने चिलिचिमः क्षुद्राण्डो मत्स्यसंहतिः ।
पोतधानं च शङ्खस्तु जलजः कम्बुरस्त्रियाम् ॥
क्षुद्रशङ्खाः शङ्खनखाः शम्बूका[1]स्त्वम्बुशुक्तयः ।
मुक्तास्फोटस्तु शुक्तिः स्त्री कूर्मः कमठकच्छपौ ॥
मण्डूके[1] भेकवर्षाभूशालूरप्लवदर्दुराः ।
मण्डूकी दर्दुरी भेकी वर्षाभ्वी कमठी [1]दुलिः ॥
वारिपिण्डः शिलान्तःस्थमण्डूकोऽथ महीलता ।
गण्डूपदः किञ्चुलुकः[1] शिली गण्डूपदी समे ॥
जलौकसः[1] स्त्रियां भूम्नि जलूका [2]रक्तपा च सा ।
तन्तुनागो वराहः स्याद् ग्राहो वरुणपाशकः ॥

---

659. 1. C. adds मत्स्यगुर° after मकर; 2. BD. वाकुर for वागुर; 3. AC वल्लव for पल्लवक. 664. 1. BD. सहस्रदंष्ट्रः पाठीनः for सहस्रदंष्ट्रपाठीनौ. 667. 1. D. शम्बुकाः शम्बु° for °शम्बुकास्त्वम्बु°. 669. 1. A. om. l 669. 670. 1. ABC. दुली for दुलिः. 672. 1. A. किञ्चलीकः, D. किञ्चिलिकः for किञ्चुलुकः. 673. 1. A. transp. l. 673 after l. 678; C. reads l 673 as रक्तपा तु जलूकायां स्त्रियां भूम्नि जलौकसः; 2 A रक्तपावना, D. रक्तपाश्च for रक्तपा च सा.

नागोऽथ नक्रः कुम्भीरः[1] कुम्भी गोमुख इत्यपि ।
जले भ्रमन्ति ये शीघ्रं कीटास्ते जलजालिकाः[1] ॥
दीर्घकोशी[1] तु दुर्नामा[2] निहाका गोधिका समे ।
स्यात्कुलीरः कर्कटकस्तस्मिन् षोडशपादपि[1] ॥
सरित्स्रवन्ती तटिनी तरङ्गिणी
सरस्वती सिन्धुरगात्मजापगा ।
नदी धुनी निर्झरिणी च निम्नगा
समुद्रकान्ता ह्रदिनी च वाहिनी ॥
स्रोतस्विनी द्वीपवती सैव शैवलिनीति च ।
मन्दाकिनी विष्णुपदी गङ्गा गीर्वाणनिम्नगा ॥
जह्नुकन्या त्रिपथगा त्रिस्रोताः स्कन्दसूरपि ।
पतंगकन्या कालिन्दी यमुना च यमस्वसा ॥
कवेरकन्या कावेरी सह्ययोनिर्मरुद्वृधा ।
ताम्रपर्णी तु ताम्राथ रेवा मेखलकन्यका ॥
सोमोद्भवा नर्मदा च विपाशायां विपाट् स्त्रियाम् ।
गोदा गोदावरी सैतवाहिनी बाहुदार्जुनी[1] ॥
करतोया सदानीरा कृष्णा स्यात्कृष्णवेणिका ।
शतद्रुस्तु[1] शितद्रुः[2] स्यात्प्रणीता पारियात्रजा ॥

---

6/5. 1. BD. नक्रकुम्भीरौ for नक्रः कुम्भीरः. 676. 1. CD. कालिकाः for जालिकाः. 677. 1. AB. °केशी for कोशी; 2. AD. दुर्नाम्नी for दुर्नामा. 678. 1. A. adds l. 673. aftr l. 678. 688. 1. BD. अर्जुना for आर्जुनी. 69. . 1. B. शरद्रु° C शुतुद्र° for शतद्रु°; 2. D. शुशुद्धिः for शितद्रुः.

हिरण्यबाहुः शोणः स्यात् संभेदः' सिन्धुसंगमः ।
शरावती वेत्रवती चन्द्रभागा सरस्वती ॥
अथ गण्डकी परुष्णी कोकामिक्री कुहुः सिनीवाली ।
सरयूः सहस्रवक्त्रा कृतमाला लघुश्रेणी ॥
ऋषिकुल्या शुक्तिमती सिन्धुश्चर्मण्वती शिप्रा' ।
देव'स्मृतिर्वितस्ता तमसा तपती दृषद्वती तापी[2] ॥
शिवा पयोष्णी निर्विन्ध्या पुष्पभद्रा पयस्वती[1] ।
देविका'गोमती वेत्रा[2] चित्रकूटा कुमुद्वती ॥
त्रिसामा' कौशिकी मालिन्याद्या बह्वो महापगाः ।
नदभेदौ' तु भिद्योद्ध्यौ[2] त्रिषु स्यात्सौरसैन्धवम् ॥
सुरसिन्धुभवं यत्तद्दाविकं देविकाभवम् ।
नदीभवं तु नादेयं सारवं सरयूभवम् ॥
प्रसन्नमच्छं कलुषमनच्छं चाविलं त्रिषु ।
कासारः सरसी सरः कमलिनी पद्माकरो दीर्घिका
वाणी द्वौ तु महाजलौ ह्रदनदौ क्षुद्रा सरित्कृत्रिमा ।
कुल्या स्यादथ खातके तु सलिलाधारस्तटाकोऽस्त्रियां
वेशन्तोऽल्पसरश्च पल्वलमथो अन्धुश्च कूपः प्रहिः ॥

---

691. 1. BD. संभेदाः सिन्धु संगमाः for संभेदः सिन्धुसंगमः. 695 1. AB. सूप्रा, C. स्रवा for शिप्रा. 696. 1 BD. वेदस्मृति' for देव-स्मृति°; 2. AC. तापिः for तापी. 697. 1 B. कुमुद्वती for पयस्वती. 698. 1. A. om. l. 698; 2 A. वेत्रकुटी चित्रा for वेत्रा चित्रकूटा. 699. 1. A. reads l 699 as: त्रियामा काशिकी माली स्याद्या बह्वयो महापगाः. 700. 1. BD भेदे for भेदौ; 2. C विन्ध्योत्थौ for भिद्योध्यौ.

उदपानोऽस्त्र्य[1]थाहाव उपकूपजलाशये ।
निपान[1]मवखातस्तुस्यादुत्कीर्णश्चुरी[2] स्त्रियाम् ॥
पद्मोऽस्त्री शतपत्रं पङ्कजमरविन्दमम्बुजं नलिनम् ।
सरसीरुहतामरसे सारसमम्भोरुहं कमलम् ।
सहस्रपत्रं राजीवं[1] नालीकं बिसनाभिजम्[2] ।
पङ्केरुहं सरसिजं महोत्पलकुशेशये ॥
पुष्करं पुण्डरीकं तु पाण्डरे सरसीरुहे ।
रक्ते तस्मिन् कोकनदं रक्तोत्पलमिति द्वयम् ॥
स्यादुत्पलं कुवलयं नीलाब्जेन्दीवरे समे ।
सौगन्धिके तु कल्हारं रक्तसंध्यकहल्लके[1] ।
कुमुदं कैरवं पद्मप्रभृतीनां कदम्बके ।
पण्डमस्त्री शिफाकन्दः[1]शालूकं[2] नालमस्त्रियम् ॥
मृणालं तु त्रिषु बिसं [1]किञ्जल्कः केसरोऽस्त्रियाम् ।
बीजकोशो वराटः स्यात्पद्माद्यं पद्मकर्कटी ॥
संवर्तिका नवं पर्णं वारिपर्णी[1] तु कुम्भिका ।
मृणालिनीबिसिन्यौ तु कमलिन्यां कुमुद्वती ॥
कुमुदिन्यां स्त्रियां नीली शैवालं शैवलः पुमान् ।

---

706. 1. BD. °पानस्तथा° for °पानोऽस्त्र्यथा°. 707. 1. B. निखान°, A. निवाहस for निपान; 2. A. उत्कीर्णश्रिरिः°; B. °उत्कीर्णकरा, for उत्कीर्णश्चुरी. 710. 1. C. नालीकं राजीवं for राजीवं नालीकं; 2. BD. °नाभिकम् for नाभिजम्. 715. 1. A. हल्हकम् for हल्लके. 717. 1. C. °कन्दे for कन्दः; 2. C शालूरं for शालूकं. 718. 1. A. किञ्जल्के for किञ्जल्कः. 720. 1. A. °पर्णा for °पर्णी.

आदिदेवहरित्पालग्रहऋष्यब्दनिःस्वनैः ।
कालचित्तादिपातालैरिहाध्याया नवोदिताः ॥

इति *वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
पातालाध्यायो नवमः

॥ इति प्रथमः काण्डः ॥

—— :*: ——

द्वितीयः काण्डः

# १०

## वसुंधराध्यायः

भूर्भूमिर्वसुधा मही वसुमती विश्वंभरा मेदिनी
गोत्रा गौर्धरणी समुद्ररशना सर्वंसहोर्वी क्षमा ।
पृथ्वी क्ष्मा पृथिवी रसा क्षितिरिलानन्ताचला काश्यपी
क्षोणी ज्या जगती स्थिरा कुरुवनी धात्री धरित्री धरा ॥
वसुंधरा भूतधात्री सैव सस्यघनोर्वरा ।
मृत्तिका मृत्प्रशस्तायां मृत्सा मृत्स्ना च मृद्युभे ॥
पुमानूषः क्षारमृत्स्यादिरिणोषवदूषराः ।
देशे त्रिषूषबहुले स्थली चाकृत्रिमे[1] स्थले ॥
मरुर्धन्वा च पुंसि द्वौ खिलं चाप्रहतं[1] त्रिषु ।
द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी ॥

---

* B after नवमः adds: करुणा मसृणा लोकप्रवणा शरणार्थिषु । प्रगुणा भरणा वाणी स्मरणानुगुणास्तु मे ॥ प्रथमः काण्डः समाप्तः ॥ D follows B but after ……गुणास्तु मे ॥ adds: ॐ इति शब्दरत्नाकरे प्रथमः खण्डः समाप्तः ॥; A. खण्डः for काण्डः; C. after काण्डः adds:- साङ्गोपाङ्गः समाप्तः । 730. 1. BD. स्यात् कृत्रिमे; A. च स्यात्कृत्रिमे for चाकृत्रिमे. 731. 1. A. च प्रहतं for चाप्रहतं.

अथ स्याज्जगती लोको विष्टपं भुवनं जगत् ।
ब्रह्मादि[1]स्तम्बपर्यन्तं ब्रह्मस्तम्बो[2]ऽखिलं जगत् ॥
वर्षोऽस्त्री भारतादिनि तानि स्युर्नव भारतम् ।
दक्षिणोत्तरतो वर्षशैलास्तेषां व्यवस्थिताः ॥
तन्नाम्नैषां यदन्वख्या[1] तेन हैमवतं च तत् ।
परस्मिन्नेव[1]मुन्नेयं वर्षे वर्षेऽद्रिनामतः ॥
हैमकूटं किंपुरुषं हरिवर्षं तु नैषधम् ।
रम्यवर्षं तु नैलं स्याच्छ्वेतवर्षं हिरण्ययम् ॥
कुरुवर्षं[1] शार्ङ्गवतं सौमेरवमिलावृतम् ।
भद्राश्वः पूर्वतो मेरोः केतुमालं तु पश्चिमम् ॥
जम्बूप्लक्षकुशक्रौञ्चशाकशाल्मलिपुष्कराः[1] ।
द्वीपवृक्षा इमे सप्त द्वीपास्तन्नामपूर्वकाः ।
नीवृज्ज[1]नपदौ देश[2]विषयौ राष्ट्रमण्डले ।
का[1]श्मीरावन्तिमद्रद्रमिडमगधसौवीरकर्णाटलाटाः
पाञ्चालाङ्गत्रिगर्ताः कुरुमलदकलिङ्गोत्कलाः कामरूपाः ।
लम्पा[1]काश्चीनगौडा मरुकुकुरमहाराष्ट्रसौराष्ट्रसाल्वाः
वङ्गा[2]भङ्गालसुह्माः[3]शकमल[4]भ(य?)विदेहान्ध्रनेपालपुण्ड्राः ॥

---

734. 1 A. स्तम्भ for स्तम्ब; 2 A. स्तम्भो° for स्तम्बो°. 737. 1. BD. यदन्याख्या for यदन्वाख्या. 738. 1. AD. °न्नव° for °न्नेव°. 741. 1. C. हरिवर्षं for कुरु°. 743. 1. A. पुष्कलाः for पुष्कराः. 745. 1. C. जनपदो for जनपदौ; 2. A. देशे विषयो; C. देशो विषयो for देशविषयौ. 746. 1. A. काशीर for काश्मीर. 747 1. A. लम्बाकाश्विन°, B. लम्पाकाश्विन°, C. लम्बाकाश्मीर, D. लम्पाकाश्मीनं, with Supra line र for न for लम्पाकाश्चीन°; 2. ABD. वङ्का for वङ्गा; 3. A. सूष्माः for सुह्माः; 4 A. मल्ह for मलभ°

को[१]सलकेकयहूणा घू[२]र्जरयौधेयहेहया मत्स्याः ।
गान्धारसिन्धुजावकसिंहलका[१]म्बोजसोमकाम्बष्ठाः ॥
पल्लवकेरलपाण्ड्याश्चेदिमहावीरदारददशार्णाः ।
भल्लाटभोजसौकरहेलाहिच्छत्रभौरिकविदर्भाः ॥
कुन्तियुगंधरशिबयस्त्रैपुरतोच्चारकुन्तलारट्टाः ।
मेखलकशूरसेना आभीरकरूशमौखरकिराताः ॥
पल्लवचोलानर्ता [१]भोडमहाभोडजोनककलिङ्गाः ।
बाह्लीकपारसीका जाङ्गलकाद्याश्च जनपदविशेषाः ॥
मगधाः कीकटाः सुह्मा [१]राढाश्चीनाः करम्भकाः ।
कलिङ्गास्तैतिलाः शूरसेनाः स्युः शूरसेनयः ॥
प्राग्ज्योतिषाः कामरूपाः विदर्भाः क्रथकैशिकाः ।
प्रत्यग्र[१]थास्त्वहिच्छत्रा गान्धारास्तु दिगन्धकाः ॥
जालंधरास्त्रिगर्ताः स्युस्तोच्चारास्तु सुहालिकाः[१] ।
चोलाः स्युरुत्पलावर्ताः कुन्तलास्तु[१] पहालिकाः ॥
भौरिकाः स्युः समतटा महाराष्ट्रास्तु [१]गण्डकाः ।
कुमालकास्तु सौवीरा विदेहास्तीरभुक्तयः[१] ॥

---

748. 1. A. कोसल° for कौसल°; 2. A. गौर्जर, B. हूर्जर, D. हूर्जर with supra line घू for हू for घूर्जर. 749. 1. A. काम्भोज for काम्बोज. 754. 1. D. बोडमहाबोड for भोडमहाभोड. 756. 1. A. रान्धाः, C. राढाः for राढाः 759. 1. C. प्रत्यग्रहाः for प्रत्यग्रथाः. 760. 1. A. सहेलिकाः for सुहालिकाः. 761 1. A. °स्तु पगालिकाः, B. °स्तूपहालिकाः, C. °स्तु सुहालकाः D. °स्त्वपहालिकाः for °स्तु पहालिकाः. 762. 1. A. दण्डकाः for गण्डकाः. 763. 1. B. हुत्तयः, D. हूतयः for भुक्तयः.

साल्वास्तु कालकुत्सीया अङ्गाश्च[1]म्पोपलक्षणाः ।
कुह्मा[1]लिकास्तु यौधेया मरवस्तु दशेरकाः ।
लम्पाका[1]स्तु मुरुण्डाः[2] स्युर्मालवाः स्युरवन्तयः ॥
तुलुष्का यवनाश्चेद्याश्चेदयो दारुकाश्च ते ।
सिन्धवोऽमी तु का[1]श्मीरप्रमुखाः पुंसि भूम्नि च ॥
तेषां मध्ये स्त्रियामेव स्रावन्त्यस्ती[1]रभुक्तयः ।
दक्षिणा विन्ध्यशैलाद्ये देशास्ते दक्षिणापथाः ॥
अथ देशे शरावत्या उदीच्यः पश्चिमोत्तरे ।
प्राच्यः प्राग्दक्षिणे देशे मध्यदेशे तु मध्यमः ॥
प्रत्यन्तो म्लेच्छदेशः स्यादपरान्तस्तु पश्चिमः ।
आकरस्तु खनिः स्त्री स्याद्रुमा तु लवणाकरः ॥
कालायसान्ध्रका[1]श्मीरसिह्मला रत्नभूमयः ।
शर्करा देशदृषदोर्देशे शर्करिलं त्रिषु ॥
शर्करावति देशेऽपि शर्करोऽथ जलान्विते ।
कच्छः पुमाननूपः स्यात्कर्करा प्रखरा मही ॥
पांसुलः पांसुबहुले नड्वलो नडभूयसि ।
पङ्किलः पङ्कबहुले वेतस्वान् वेतसान्विते ॥
शाद्वलः शादसंछन्ने कुमुद्वान् कुमुदोत्तरे ।
त्रिष्वनूपाद्यो गोष्ठं गोस्थानं पुंसि तु व्रजः ॥

764. 1. AC. चम्बोप for चम्पोप. 765. 1. A. कुभालिकाः, B. कुहालिकाः, D. कह्मालंकाः for कुह्मालिकाः. 766. 1. AC लम्बाकाः for लाम्पाकाः; 2. मुरुण्याः for मुरुण्डाः. 768. 1. AC. काशीर for काश्मीर. 769. 1. A. तीरहूर्तयः, BD. तीरहुत्तयः for तीरभुक्तयः. 775. 1. A. काशीर for काश्मीर.

गौ[1]ष्ठीनं भूतपूर्वं तद्गोष्ठश्वो गोष्ठगे शुनि ।
उपजिह्वोपदीका स्त्री वम्री सैवोपदेहिका ॥
पुंनपुंसकयोर्वम्रीकूटं वल्मीकमित्युभे ।
नाकुर्ना वामलूरश्च [1]श्रीवासः कृमिपर्वतः ॥
अग्रहारो द्विजावासो ग्रामसंवसथौ समौ ।
क्षुद्र[1]ग्रामे ग्रामटिका पल्ली खर्वट इत्यपि ॥
ग्रामेयकाश्च ग्रामीणा ग्राम्याश्च ग्रामवासिनः ।
सीमसीमे स्त्रियौ पुंसि त्वाघाटोऽवधिरित्युभौ ॥
पक्कणः शबरावासो घोष आभीरपल्लिका ।
जाङ्गलो निर्जलो देशो विरलद्रुमपर्वतः ।
अवपातस्तु वारिः स्त्री दारणग्रहणच्चितौ ॥
स्यान्नदीमातृको देशो नद्यम्बूत्पन्नजीवनः ।
वृष्टिसंपन्नवृ[1]त्तिर्यः स देशो देवमातृकः ॥
अथ वर्त्मायनं पन्था मार्गोऽध्वा पदवी सृतिः ।
सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ॥
सुपन्थाश्चातिपन्थाश्च सत्पथश्च शुभे पथि ।
कदध्वा कापथो व्यध्वो दुरध्वो विपथः समाः ॥
अपन्थास्त्वपथं दूरशून्ये प्रान्तरमध्वनि ।
संक्रमो दुर्गमार्गः स्याच्छृ[1]ङ्गाटं तु चतुष्पथम् ॥

---

783. 1. AC. गोष्ठीनं for गौष्ठीनं. 786. 1. BD. also read भूश्रवः for श्रीवासः. 788. 1. AB. क्षेत्रग्रामे for क्षुद्रग्रामे. 795. 1. BD. वृद्धिः for वृत्तिः. 801. 1. A. शृङ्गाटस्तु for शृङ्गाटं तु.

जङ्घापादश्चतुष्पादस्त्रिपादस्तु गृ[1]हान्तरम् ।
प्रतिमार्गो [1]बद्धपथः प्राग्वंशः [2]पदिकोऽपि च ॥
यवाष्टकं त्वङ्गुलो ना शमस्तु चतुरङ्गुलः ।
नि[1]ष्टिरष्टाङ्गुलोऽथ स्याद्वितस्तिर्द्वादशाङ्गुलः ॥
वितस्तियुग्मं किष्कुः स्यान्नल्वः किष्कुचतुःशतम् ।
गव्यूतिः क्रोशयुग्मं स्याद्योजनं योजनापि च ॥

इति *श्रीवत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
वसुंधराध्यायो दशमः ॥

## ११

## पर्वताध्यायः

अचलशिलोच्चयशैलक्षितिधरगिरिगोत्रपर्वताहार्याः ।
नगशिखरिसानुमदगग्रावमहीध्राद्रिधरधराकीलाः ॥
रजतगिरिः कैलासः शंकरगिरिरेकपिङ्गशैलश्च ।
उदयः पूर्वगिरिः स्यादस्तश्चरमाद्रिरद्रिराजस्तु ॥
हिमवांश्चन्दनशैलो मलयस्त्रिककुत् त्रिकूटगिरिः ।
प्रस्रवणमाल्यवन्तौ मन्दरमन्थानभूधरौ च समौ ॥
चक्रवालस्तु चक्राद्रिर्लोकालोकः परावरः ।
हिरण्यनाभो मैनाकः पारियात्रः सुदारुकः ॥

---

802. 1. AC. ग्रहान्तरम् for गृहान्तरम्. 803. 1. AC. बन्धपथः for बद्धपथः; 2. A. पथिको° for पदिको°. 805. 1. BD. निदिष्टिः, A. निष्ठिः for निष्टिः. *BCD. om. श्री वत्सकुलवामनभट्टबाणविरचिते.

महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षपर्वतः ।
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥
कूटोऽस्त्री शृङ्गशिखरे प्रपातस्तु भृगुः समौ ।
तटं त्रिषु नितम्बः[1] स्नुः सानुप्रस्थे तु पुंसि वा ॥
मेखला कटकोऽस्त्री स्याद्गह्वरं तु गुहा दरी ।
कन्दरः कन्दरा कुञ्जनिकुञ्जौ वा नपुंसकौ[1] ॥
कुडु[1]ङ्गोऽस्त्री त्रयश्चामी वृक्षादिपिहितान्तरे ।
प्रस्तरोपलपाषाणग्रावाश्मानः शिला दृषत् ॥
गिरेरुपत्यकाधोभूरूर्ध्वभूमिरधित्यका ।
स्थूलोपला गिरेर्भ्रष्टा गण्डशैलाश्च गण्डकाः ॥
झरी[1] तु निर्झरझरावुत्सः प्रस्रवणं गिरेः ।
शुण्डी शौण्डं चूतको ना पादाः पर्यन्तपर्वताः ॥
स्याच्छिलाजतु शैलेयं गिरिधातुस्तु गैरिकम् ।
शस्त्रं कालायसं तीक्ष्णं कृष्णं पारशवायसी ॥
गिरिसारोऽश्मसारश्च [1]सरकः सार [2]आयसः ।
धूर्तसिंहाणमण्डूराण्यमूनि त्रीण्ययोमले ॥
अयोमणिस्त्वयस्कान्तः स्यादायोविकृतिः [1]कुशी ।
पीतलोहः[1] स्त्रियां रीतिरारकूटकमस्त्रियाम् ॥

---

819. 1. AC. नितम्बस्तु for नितम्बः स्नुः. 821. 1. CD. नपुंसके for नपुंसकौ. 822 1. BD. कुडुङ्ग, C कटकः for कुटुङ्गः. 826. 1. BD. दरी for झरी. 830. 1. A. रसकः for सरकः; 2. C. आयसम् for आयसः. 832. A. कुशः for कुशी. 83`. 1. A. 1. पित्तलोहोऽस्त्रियां for पीतलोहः स्त्रियां.

पित्तलं कपिलोहं स्या[1]द्राजरीतिर्महेश्वरी ।
काञ्चनी कपिला [1]राष्ट्री ब्राह्मणी चारमस्त्रियाम् ॥
पञ्चलोहं गुरुज्येष्ठं निष्ठुरं दारुकण्टकम् ।
अन्यलोहं सिं[1]हमलं [2]मलिकासरटी स्त्रियाम् ॥
कांस्यं घण्टास्वनं नाद्यं सौरष्ट्रं [1]रवणं मलम् ।
कृत्रिमं लोहजं भूरिलोहं चासुरसंज्ञकम् ॥
सी[1]सोऽस्त्री त्रपुसं च स्याद्योगेष्टं भुजगाह्वयम् ।
त्रपु नागं चीनपट्टं हेमघ्नं यवनेष्टकम् ॥
रङ्गं[1]त्रपुविकारे तु त्रिषु त्रापुषमित्यदः ।
गुरुपत्रं त्रपु चोभ्यं [1]पिच्छटं मुखभूषणम् ॥
परासं हेमजं [1]रङ्गं [2]वङ्गं तमरुकं शठम् ।
काचः चारोऽथ चपलो रसः सूतश्च पारदः ॥
कुरुविन्दं हंस[1]पादं हिङ्गु[2]लं जातिलिङ्गकम् ।
मनःशिला तु कुनटी नागजिह्वा महारसा ॥
रञ्जनी रोचनी विद्युद्र[1]सनेत्री विगन्धिका ।
मनोगुप्ता च नेपाली करवीरा कला च [1]सा ॥

834. 1. D. स्याद्भ्राज' for स्याद्राज°. 835. 1. C. रौद्रं for राष्ट्री. 837. 1. BD. सिन्धुमलं for सिंहमलं; 2. A. नीतिका सरटिः स्त्रियौ, C. नीविकासरटी स्त्रियौ for मलिकासरटी स्त्रियाम्. 838. 1. A. रावणं, BD. लवणं for रवणं. 840. 1. B. deletes lines 840. and 841; 2. त्रपुसीनं, A. त्रपुसीसं for त्रपुसं च. 842 1 B. रागं for रङ्गं. 843. 1. BD. पिच्छदं for पिच्छटं. 844. 1. B. रागं for रङ्गं; 2. A. वंकं तमनुकं, B. वङ्क नमरुकं, C. वङ्कन्तंमरुकं for वङ्गं तमरुकं. 846. 1. BD. पदं for पादं; 2. B. हिङ्गुजं for हिङ्गुलं. 848. 1. BD. रसनेऽत्र for रसनेत्री. 849. 1. A. ना for सा.

हरितालं[1] तु खर्जूरं पीतनं नटभूषणम् ।
वंशपत्रं ताल[1]मालं पिञ्जरं रोमहृद्धरम् ॥
गन्धाश्मा गन्धकः पीतः पामशत्रुः सुगन्धिकः ।
अभ्रकं व्योममेघाख्यं गिरिजामलमित्यपि ॥
सौराष्ट्री कालिका काली मृगाख्या पार्वती सती ।
आढकी तुवरी ताली भूनामा च मृगाह्वया ॥
शुक्लधातौ पाकशुक्ला कठिनी कर्कटी कटी ।
बोलः पिण्डः शशः प्राणो गोलो गण्ड(न्ध?)रसो रसः ॥
अथ गोला तु नेपाली माच्चिकं चक्रसंज्ञकम्[1] ।
स्रोतोऽञ्जनं तु सौवीरं कापोताञ्जनयामुने[1] ॥
तुत्थाञ्जनं[1] शिखिग्रीववितुन्नकमयूरकम् ।
रीतिपुष्पं पुष्पकं च पौष्पकं कुसुमाञ्जनम् ॥
रसाञ्जनं तार्क्ष्यशैलं शैलेयं रसगर्भकम् ।
तुत्थं तु [1]दार्विकक्काथसंभवं कर्परीति च ॥
कुलालिका कुम्भकारी चक्षुष्या च कुलत्थिका ।

इति *वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
पर्वताध्याय एकादशः ॥

——:*:——

850. B. अरि for हरि. 851. 1. A. नालमूलं for तालमालं. 858. 1. B. संज्ञिकम् for संज्ञकम्. 859. 1. A. कलातीजनयामुने for कापोताञ्जनयामुने. 860. 1. AC. तुत्थाञ्जने for तुत्थाञ्जनं. 863. 1. C. दार्विकं for दर्विक. * BCD. om. वत्सकुलवामनभट्टबाण-विरचिते.

# १२

## वनाध्यायः

काननं विपिनारण्यगहनानि वनं[1] वनी ।
अटवी दवदावौ च कान्तारं सत्रमित्यपि ॥
वन्या वनसमूहे स्याद्वन्यं वनभवे त्रिषु ।
महारण्यमरण्यानी प्रस्तारस्तु तृणाटवी ॥
कृत्रिमं वनमाराम[1] उद्यानोपवने समे ।
राज्ञां तु वनमाक्रीडो वेश्मारामस्तु निष्कुटः ॥
गणि[1]कामात्यभवनोपवने वृक्षवाटिका ।
प्रमदवनं तद्यत्स्यादुपवनमन्तःपुराङ्गनाद्यु[1]चितम् ॥
पादपवृक्षपलाशिद्रुमतरुकुटविटपिशाखिनगसालाः[1] ।
अगमो द्रगो भूरुट् कुजोऽनोकह इत्यपि ॥
वन्ध्योऽफलोऽवकेशी स्यादवन्ध्यस्तु फलेग्रहिः ।
पुष्पितो जातपुष्पः स्यात् फलिनः फलवान् फली ॥
उत्फुल्लफुल्लसंफुल्लप्रफुल्लविकचस्फुटाः ।
व्याकोचोन्मिषितोन्निद्रोद्बुद्धा वन्ध्यादयस्त्रिषु ॥
वानस्पत्यः फली पुष्पात् फल्यपुष्पाद्वनस्पतिः ।
फलपाकावसनाः स्युरोषध्यो व्रततिर्लता ॥

---

865. 1. AC. वनं न ना for वनं वनी. 869. 1. B. वन आराम उद्यान°, AC. वनमाराममुद्यान° for वनमाराम उद्यान°. 871. 1. C. गहनामात्यपवन° for गणिका°. 872. 1. A. °भ्युचितम् for °द्युचितम्. 873. 1. BD. शालाः for सालाः.

वल्ली च वल्लरी चाथ सैव वीरुत् प्रतानिनी ।
गुल्मिन्युलपमस्त्री तु कोटरो निष्कुहः[1] पुमान् ॥
बुघ्ना[1]ङ्घ्री मूलनेत्रे च शिखराग्रे शिखा स्त्रियाम् ।
त्वक्त्वचाच (छ ?) छ्यश्चोलो वल्कं वल्कलमस्त्रियाम् ॥
परुः पर्व पुमान् ग्रन्थिर्विस्तारो विटपोऽस्त्रियाम् ।
शाखालता स्कन्धशाखा शाला[1] तुल्ये शिफाजटे ।
अवरोहस्तु सा[1] शाखा या मूलादग्रमाश्रिता ॥
अस्त्री स्थाणुर्ध्रुवः शङ्कुरङ्कूरोऽङ्कुरमस्त्रियाम् ।
स्तम्बः प्रकाण्डमस्त्री स्याद्ध्रस्वशाखाशिफः क्षुपः ॥
अप्रकाण्डे स्तम्बगुल्मौ द्रुमाङ्गः[1]कण्टकोऽस्त्रियाम् ।
समौ स्कन्धप्रकाण्डौ द्वौ सारो मज्जा समावुभौ ॥
स्युरुच्छ्रायोच्छ्रयोत्सेधा नगादीनां समुन्नतौ ।
माढिः[1] शङ्कुः पत्रसिरा त्रिषु शुङ्गा च कोशिका[2] ॥
पल्लवोऽस्त्री किसलयं प्रवालं पुंनपुंसकम् ।
जालकं क्षारकः पुंसि कलिका कोरकोऽस्त्रियाम् ॥
मुकुलोऽस्त्री कुड्मलो[1]ऽस्त्री वल्लरी मञ्जरी स्त्रियौ ।
गुलुच्छगुच्छस्तबकाः पुष्पं तु कुसुमं सुमम् ॥

---

882. 1. BD. निष्कुटः for निष्कुहः. 883. 1. AC बुध्नोऽङ्घ्रिः for बुध्नाङ्घ्री. 886. 1. A. शाखा, B. शफा for शाला. 887. 1. BD. शाखा या मूलादग्रं समाश्रिता for सा शाखा या मूलादग्रमाश्रिता. 890. 1. A. धूमाङ्कः for द्रुमाङ्गः. 893. 1. A. मारिः, B. माठः for माढिः; 2. A. केशिका, B. कौशिका, D. गोशिका for कोशिका. 896. 1. A. कश्मलो° C. कुट्मलो° for कुड्मलो°.

मरीचकं प्रसूनं च सूनं सुमनसः स्त्रियः ।
प्रसवो[1] मकरन्दस्तु मरन्दः पुष्पजं मधु ॥
पुंसि च्छदश्छदनपत्रपलाशपर्णबर्हं दलं रजसि पुष्पभवे परागः ।
निर्याससलग्रखपुरास्तु समाः प्रसून[1]बन्धस्तु वृन्तमथ सस्यफले समाने ॥
विदलः पाटितं दारु काष्ठं दार्विन्धनैधसो[1] ।
इध्ममेधः समित् स्त्री स्याद्वं[1]शिर्नी परुरङ्कुर[2]ः ॥
पुंनागाम्रादिकं सर्वं द्विहीनं फलपुष्पयोः ।
आश्वत्थमैङ्गुदं प्लाक्षं नैयग्रोधं च बार्हतम् ॥
शैग्रवं वैणवं च स्युरश्वत्थादिफले क्रमात् ।
फले स्वलिङ्गा व्रीह्याद्या हरीतक्यादयस्तथा ॥
पुष्पे स्वलिङ्गा जात्याद्याः पुष्पे क्लीबे च पाटला ।
विदार्याद्यास्तु मूलेऽपि जम्बूः स्त्री जम्बु जाम्बवम् ॥
तत्फलेऽथ स्त्रियामेव शिम्बी स्यात् फलकोशिका ।
अश्वत्थपिप्पलगजाशनबोधिवृक्ष-
यज्ञद्रुमाश्वलदलोऽथ पलाशपर्णौ ।
यज्ञीयकिंशुकसमिद्द्रुमवातपोता
ब्रह्मद्रुमे स्युरथ दन्तशठः कपित्थः ॥
दधित्थमन्मथदधिफलपुष्पफला अपि ।
आम्रे [1]माकन्दकामाङ्गचूतास्तस्मिन् ससौरभे ॥

---

899. 1. C. लतान्तं for प्रसवः. 901. 1 A बद्धः for बन्धः 902. 1. BD. दार्विन्धने समे for दार्विन्धनैधसी. 903. 1. B. वरुनी A. वशिर्नी for वंशिर्नी; 2. BD. अङ्कुरम् for अङ्कुरः. 914. 1. A. यागन्तं for माकन्द.

सहकारो रसालश्च जटा[1]लो बहुपाद्वटः ।
न्यग्रोधोऽथ नदीसर्ज इन्द्रद्रुः ककुभोऽर्जुनः ॥
वीरद्रुश्च [1]सुगन्धिः स्यादर्जुनश्च (नाख्यो ?) धनंजयः ।
अश्वकर्णो लतावृक्षः कुशिको दीर्घवृन्तकः ॥
राजकद्रुरजाकर्णस्तिमिश[1]स्तु रथद्रुमः ।
अश्मगर्भो[1] रक्त[2]सारः स्यन्दनो नेमिरित्यपि ॥
नागरङ्गस्तु नारङ्गो नार्यङ्गस्तक्रवासनः ।
जम्बीरे दन्तशठो जम्भलजम्भीरजम्भलिकुचाश्च ॥
वरणे सिततरुवरुणौ सेतुकुमारौ च तिक्तशाकश्च ।
अभया पूतना पथ्या हरीतक्यमृता शिवा ॥
वयःस्था[1] श्रेयसी नन्दी निर्व्यथा रेचकी जया ।
अमृता स्यात्तिष्यफला[1] श्रेयःस्थामलकी त्रिषु ॥
पारिभद्रस्तु निम्बद्रुर्मन्दारः पारिजातकः ।
अक्षस्तुषः कर्षफलः कलिद्रुर्विभीतकः स्यात् त्रिषु भूतवासे ।
मधुद्रुमः स्वादुफलो मधूकः स्वादुप्रसूनश्च गुडप्रसूनः ॥
वानप्रस्थो [1]मधुष्ठीलो जलजेऽत्र मधूलकः ।
गायत्री खदिरः शल्यः कुम्भाण्डो दन्तधावनः ॥

---

915. 1. A. जटिलः for जटालः. 917. 1. C. सुगन्धः, D. सुगन्धी for सुगन्धिः. 919 1. B. तिमिरः for तिमिशः. 920 1. B. अश्वगर्भः for अश्मगर्भः; 2. C. रत्नसारः for रक्तसारः. 925. 1. D. वचस्था for वयःस्था. 926. 1. ABD. फली for फला. 930. 1. C. मधुष्ठीलः शैलजैत्र, D. मधुष्ठीलः शेलजेऽत्र for मधुष्ठीलो जलजेऽत्र.

खरत्वग्बाल[1]पुत्रश्च खरसारोऽसितच्छदः ।
खदिरे स्युर्विट्खदिरश्यामसारारिमेदकाः ॥
श्वेतस्कन्धमहासारसोमवल्कघुणौ[1]कसः ।
धवस्तु शरभाक्षः स्याद्धौराक्षो मधुरच्छदः ॥
कालस्कन्धः कृष्णसारतिन्दुकस्फूर्जका अपि ।
शिंशपायां तीक्ष्णगन्धा भस्मगर्भाविसादनी ॥
कपिला [1]पिच्छिला कृष्णसारा सैवाङ्गसारका ।
अथ स्यात् पीलुकः काकः काकेन्दुः काकतिन्दुकः ॥
मृदुत्वक्च[1]र्मिणौ भूर्जे[2] भूर्जपत्रः मितच्छदः ।
सर्जो[1] निकोचकाङ्कोलौ बिल्वः[2] श्रीफलबिल्वकौ ॥
तत्र शाण्डिल्यशैलूषपूतिपाकमहाफलाः ।
मालूरश्चाथ यज्ञाङ्गो हेमदुग्ध उदुम्बरः ॥
क्षीरी जन्तुफलस्तस्मिन् जघनेफल इत्यपि ।
फल्गुस्तु [1]मलपूः काकोदुम्बरी जघनेफला ॥
कोविदारे चम[1]रिको रक्त[2]पुष्पो युगच्छदः ।
कुद्दालः काञ्चनारोऽपि महिषाक्षस्तु गुल्गुलुः[1] ॥
कौशिको धूपनिर्यासः कुम्भोलूखलकं पुरः ।
निम्बे स्युर्हिङ्गुनिर्याससर्वतोभद्र[1]मालकाः ॥

---

932. 1. BD. त्वश्चालपत्रः C. त्वक्तालपुत्रः for त्वग्बालपुत्रः. 934. 1. B. गुणौकसः for घुणौकसः. 938. 1. BC. पिच्छला for पिच्छिला. 940. 1. AC. चार्मणो for चर्मिणौ; 2. AD. भूर्जौ for भूर्जे. 941. 1. BD. सज्जः for सर्जः; 2. A. बिल्वि॰, C. बिल्वी, D. भिल्ली for बिल्वः. 945. 1. A. मलुषः for मलपूः. 946. 1. C. चमरुकः for चमरिकः; 2. C. रत्नपुष्पः for रक्तपुष्पः. 947. 1. D. गुग्गुलुः for गुल्गुलुः. 949. 1. A. मूलकाः for मालकाः.

अरिष्टः पिचुमन्दश्च स एव यत्रनेष्टकः ।
स्थिरायुः पिच्छिला मोचा पूरणी शाल्मलिर्द्वयोः ॥
शाल्मलीवेष्टके पिच्छा कण्टकी कूटशाल्मलिः ।
रोचनो रक्तपुष्पश्च व्याघ्रपात्तु विकङ्कतः ॥
मधुच्छदो ध्रुवावृत्तो ग्रन्थिलोऽथ विषाणिनि ।
अजावृत्तो मेषशृङ्गश्चक्षुष्यो बहुशृङ्गकः ॥
वेल्लन्तको वीरतरुर्वीरद्रुः पृथुमूलकः ।
बह्वाकारो दीर्घमूलो रुद्राक्षस्तु महामुनिः ॥
चतुर्मुखो ब्रह्मसंज्ञः पञ्चास्यस्तु हराह्वयः ।
षण्मुखो गुहसंज्ञः स्यात् किंपाकः काकमर्दकः ॥
कु[1]लवृत्तो रज्जुदारुरुद्दालो बहुवारकः ।
शीतः श्लेष्मातकः शेलुर्विषघ्नो द्विजकुत्सितः ॥
न्युब्जः कर्मफलो हव्यकर्मरङ्गशठेश्वराः ।
महीपतिर्दन्तशठः शिरीषस्तु कपीतनः ॥
भण्डिलोऽथ जटी प्लक्षः कर्पटी बहुमूलकः ।
दोषग्राहस्तु कनको द्रावणोऽम्बुप्रसादनः[1] ॥
उल्लेखनीयो लक्ष्मीवान् स्रा[1]वणश्च सरश्च सः ।
शिग्रुर्मोचकतीक्ष्णगन्धवृषदा अक्षीभशोभाञ्जनौ
रक्तोऽसौ मधुशिग्रुरेव वनजः स्यात् फेनिलोऽरिष्टकः ।
शल्यः स्यात् करहाटको मरुवकः पिण्डीतकश्छर्दन-
स्तस्मिन् गारवरा[1]टकौ च मदनश्चाङ्गारकस्त्विङ्गुदी ॥

960. 1. D. कूल for कुल. 965. 1. A. साधनः for सादनः. 966. 1. AB. श्रावणः for स्रावणः. 968. 1. A. गारवराटकश्च for गारवराटकौ च.

कुणवृक्षः[1] पूतिवल्कस्तापसद्रुम इङ्गुदः ।
स्त्रीप्रियो वञ्जुलोऽशोकः कङ्केलिः कर्णपूरकः ॥
पिण्डी तु रक्ताशोकः स्याद्गर्दभाण्डः कपीतनः ।
कन्दरालः सुपार्श्वश्च प्लक्षोऽथो भूतपुष्पकः ॥
स्योनाकशूकफलरण्डुकरक्तपुष्प—
पत्रोर्णगोपनटटु[1]ण्डुक दीर्घवृन्ताः ।
मण्डूकपर्णशुकनासकुटन्नटर्क्ष—
रोमच्छदाश्च तिलकक्षुरकौ समानौ ॥
समानाः स्युः परिव्याधकर्णिकारद्रुमोत्पलाः ।
घण्टा तु पाटलिर्मोक्षमुष्कगोलीढझाटलाः ॥
स्त्रियां फलेरुहामोघा काचस्था[1]ली च पाटला ।
द्वयोस्तु पाटलिस्तुल्यौ [1]बुर्बुरश्वेतकण्टकौ ॥
पनसः कण्टकिफलः पयोण्डो जघनेफलः ।
मधुबीजोऽथ पनसे निचुलो हिज्ज[1]लोऽम्बुजे ।
समौ तमालतापिञ्छौ कदम्बस्तु हलिप्रियः ।
नीपकश्च[1] प्रियश्चाथ सन्नकद्रुर्धनु[2]ष्पटः ।
प्रियालो दीर्घवृन्तस्तु वेत्रो दुर्धर्षणश्च सः ॥
सालस्तु राजनिर्यासो मोरटोऽङ्कोलपत्रकः ।
सप्तपर्णस्त्वयुक्पर्णः शारदो विषमच्छदः ॥

---

969. 1 A. तूणवृक्षः for कुणवृक्षः. 973. 1. ABD. डुण्डक for टुण्टुक. 977. 1. BD. स्थानी for स्थाली. 978. 1. A. बुद्बूल, C. बुद्बुर., D. बर्बुर for बुर्बुर. 980. 1. BC. हिज्जुलः for हिज्जलः. 982. 1 C. चाप्रियः for च प्रियः; 2. A. धनुःपटः for धनुष्पटः.

विशालत्वक् कटुक्षीरः करको दाडिमो द्वयोः ।
फलपूरो बीजपूरो रुचको मातुलुङ्गकः ॥
मातुलुङ्गी च सैवाम्ला पूतिपुष्पी वृकाम्लिका ।
तीक्ष्णगन्धेन्द्रसुर[1]ससिन्दुवारास्तु नीलिका ॥
भूतकेशी च निर्गुण्डी शुकनासस्तु निम्बकः ।
शुक[1]सारो महानिम्बः कट्वङ्गो[2] दीर्घवृन्तकः ॥
इन्द्रद्रुः कुटजो वत्सः शक्रश्च[1] गिरिमल्लिका ।
यवक्षारः कलिङ्गेन्द्रयवभद्रयवानि च ॥
अस्त्रियां स्युः कलिङ्गाद्या लिकुचो लकुचो डहुः[1] ।
पीतसारस्तु बन्धूकप्रसवासनजीवकाः ॥
सर्जश्च क्षारवृक्षस्तु मुष्ककश्च[1] विषापहः ।
पुंनागो पुरुषस्तुङ्गः केसरो देववल्लभः ॥
बकुलो मञ्जरीहृद्यश्चाम्पेयश्चम्पकोऽस्य तु ।
कलिका स्याद्गन्धकली नागः स्यात् काञ्चनाह्वयः ॥
चाम्पेयः केसरश्चाथ द्वौ पीतनकपीतनौ ।
आम्रातके करञ्जस्तु करजो नक्तमालकः[1] ॥
चीरिबिल्वः प्रकीर्यस्तु पूतिकः [1]कलिमारकः ।
तत्रैव पूतिकरजो मेदास्त्वङ्गारवल्लरी ॥

989. 1. BCD. सुरसा सिन्दुवारस्तु for सुरससिन्दुवारास्तु. 991. 1. A. शुक्र, D. शूक for शुक; 2. C. कट्यङ्गः for कट्वङ्गः. 992. BD. चक्रश्च for शक्रश्च. 994. 1. A. टुहुः for डुहुः. 996. 1. C. मूषकश्च for मुष्ककश्च. 1001. 1. A. मूलकः for मालकः. 1002. 1. C. करि for कलि.

मर्कटी पुंसि षड्ग्रन्थो[1] गोजिह्वादार्विके[2] समे ।
शम्याकः कृतमालदीर्घकलिका[1] वारेवतः प्रग्रहो
राजद्रुश्चतुरङ्गुलोऽपि च सुवर्णश्च स्युरारग्वधे ।
नादेयी विदुलो रथाभ्रकुसुमौ वानीरशीतौ परि-
व्याधो वञ्जुलवेतसौ च विदलश्चामी समाना नव ॥
श्रीपर्णी सर्वतोभद्रा गम्भारी[1] मधुपर्णिका ।
काश्मरी[1] भद्रपर्णी[2] च काश्मर्यश्चाथ कट्फलः ॥
कैडर्यो[1] ना कुमुदिका श्रीपर्णी कुम्भिका च सा ।
अगस्त्यो मुनिमार्जारावगस्तिः[1] शुकसारकौ ॥
शमी शिवा सक्तुफला जया साल्पा शमीरकः ।
पीलुर्गुडफलः स्रंसी तत्र शैलसमुद्भवे ॥
अक्षोटकन्दरालौ द्वौ सुषेणः करमर्दकः[1] ।
कृष्णपाकफलौ विघ्नः पाककृष्णफलोऽपि सः ॥
घोण्टा तु बदरी कोलिः[1] कर्कन्धूर्न नपुंसके ।
कुवलं फेनिलं कोलं सौवीरं बदरं तथा ॥
लताकोलौ तु खपुरा गिरिकोलौ तु सौरसः ।
हस्तिकोलौ महाघोण्टा गोपघोण्टा महाफला ॥

---

1004. 1. C. षड्ग्रन्थिः for षड्ग्रन्थः; 2. A. दार्विकी for दार्विके. 1007. 1. D. भम्भारी for गम्भारी. 1008. 1. C. काश्मीरी for काश्मरी; 2. C. दद्रुपर्णी for भद्रपर्णी. 1009. 1. A. कैतर्यः, C. कैसर्यः for कैडर्यः. 1010. BD. अगस्ती for अगस्तिः. 1013. 1. ABD करविन्दकः for करमर्दकः. 1015. BD. कोली for कोलिः.

जलकोलौ तु सङ्गाली[1] शिवकोलौ तु कर्कटी ।
जम्ब्वां त्रिसारा विरजा महाजम्ब्वां महाफला ॥
सुरसा राजजम्ब्वां तु सुलभः सुरभिच्छदः ।
काकजम्ब्वां तु मेघाभः[1] शिवेष्टः शतपल्लवः[2] ॥
जम्बूटनीलजम्बूटौ [1]सल्लकी सुखिनी ध्रुवा ।
हस्तिप्रिया ह्लादिनी[1] च सुरभिः कुञ्जराशनः ॥
स्नुक् स्त्रियां वज्रसीहुण्डबहुक्षीरविषाणिनः ।
महावृक्षमहाक्षीरयुग्म[1]कण्टकचित्रकाः ॥
स्नुह्यां समन्तदुग्धा [1]स्याद्वज्रिणी च [2]त्रिकण्टका ।
ऐरावतो[1] नागरङ्गो नमेरु[2]र्नागभूरुहः ॥
सुभिक्षा त्वनलज्वाला धातकी धातुपुष्पिका ।
अजशृङ्गी विषाणी स्यात् पप्फणस्तु श्ववामनः ।
भूतृणो गुह्यबीजः स्यात् सुगन्धः पुंस्त्वनाशनः ।
अम्लिका तिन्त्रिणी चिञ्चा शुक्तिर्नारी[1] कपिप्रिया ॥
रोही रोहितकः कुन्दो माध्यः[1] पूगः कलिङ्गकः ।
क्रमुको ब्रह्मदारुश्च पूगी पुंसि तु पर्पटः ॥
तत्फले कुहली पाली क्रमुकः पट्टिकाह्वयः ।

---

1019. 1. C. संहाली for सङ्गाली. 1022. 1 B. मेघाम्बः, D. मेघाम्भः for मेघाभः; 2. C. शतजम्बवः for शतपल्लवः. 1023. 1. B वल्लिकी, CD. वल्लकी for सल्लकी 1024. 1. CD. ह्लादिनी for ह्लादिनी. 1026. 1. C. युद्ध for युग्म. 1027. 1. BD च for स्याद्; 2. A. त्रिकूटका for त्रिकण्टका. 1028. 1. AC. वीरावतः for ऐरावतः 2. BD नग for नाग. 1030. 1. B. पपृणस्त्वश्ववामनः, C. पप्पणस्तु श्ववामनः, D. पपृणस्वश्च वामनः for पप्फणस्तु श्ववामनः. 1032 A. शक्तिः for शुक्तिः. 1033. 1. BD. मात्स्यः for माध्यः

लाक्षाप्रसादनः पट्टी सरलः पीतपादपः ॥
पूतिकाष्ठोऽपि[1] काम्पिल्यः कर्कशश्चन्द्र इत्यपि ।
अश्वकर्णमहासारसस्यसंवरसर्जकाः[1] ॥
सालोऽथ गालवो लोध्रः [1]शाबरस्तिल्व[2]मार्जनौ ।
तिरीटोऽथ फलाध्यक्षो राजादन इमौ समौ ॥
अर्के तु वसुकास्फोटसदापुष्पविकीरणाः ।
मन्दारगणरूपौ च श्वेतार्कस्तु प्रतापसः[1] ॥
एकाष्ठीलः पाशुपतालर्कौ च शिवमल्ल्यपि[1] ।
शुक्लपुष्पः कुरवको नागरो मदनोऽपि सः ॥
महासहाया[1]मम्लानः शोणे तस्मिन् कुरण्टकः ।
पीते तस्मिन् कुरवकस्तज्झाटे कलशोदकः ॥
किंकिरातः किंकिराटो झिण्टी सैरेयकः पुमान् ।
पुंसि त्वार्तगलो बाणो बाणा दासी सहा च सा ॥
रुजाकरस्त्वार्तगलो भीषणो बहुकण्टकः ।
स्वादुतिक्तफलो जालवृक्षो दुर्धर्षकर्कशौ ॥
काकादनी गृध्रनखी दुराधर्षा स्थिरा च सा ।
जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ॥
अग्निमन्था हविर्मन्था वारणिर्गणिकारिका ।
समाः श्रीखण्डभद्रश्रीपटीरमलयोद्भवाः ॥

1037. 1. B. हि for °ऽपि. 1038. 1. D. संज्ञकाः for सर्जकाः. 1039. 1. D. शारभः for शाबरः; 2. AD. तिल for तिल्व. 1042. 1. A. प्रतापनः for प्रतापसः. 1043. 1. A. शिवमूल्यपि for शिवमल्ल्यपि. 1045. 1. BD. महासहायामन्थानः for महासहायामम्लानः.

रोहिणो गन्धसारश्च गन्धश्चन्दनमस्त्रियाम् ।
द्राक्षा तु गोस्तनी स्वाद्वी मृद्वीका कालमेषिका' ॥
रसामृता प्रियाला च नीली स्यान्नीलकेशिका ।
श्रीफली रञ्जनी तुत्था ग्रामीणा मधुपर्णिका ॥
क्लीतकी नीलिनी डोला कुणिका च महारसा ।
पुण्ड्रकस्त्वतिमुक्तः स्याद्वासन्ती माधवी लता ॥
कुणिः कुबेरकः कच्छो नदीवृक्षो वितुन्नकः ।
कच्छू'रको द्राविडकः काल्यको वेधमुख्यकः ॥
चण्डातको हरिद्वेमौ गणहासश्च राक्षसी ।
बहुला चन्द्रबालैला पृथ्वीका निष्कुटी' तुटिः ॥
द्रामिडी चाथ सारङ्गी 'त्रिपुटा चोपकुञ्चिका ।
गोवन्दनी लता गुन्द्रा कारम्भी महिलाह्वया ॥
विष्वक्सेना गन्धफली प्रियङ्गुः फलिनी फली ।
श्यामा च प्रियकश्चाथ वन्दा स्याच्छिखराह्वया ॥
वृक्षादनी वृक्षरुहा जीवन्त्यपदरोहिणी ।
धुत्तूरः कितवो धूर्त उन्मत्तः कनकाह्वयः ॥
मादनो मदनश्चास्य फले मातुलपुत्रकः ।
काला मसूरविदला पाठिनी च सुषेणिका ॥
गलूची तु च्छिन्नरुहा विशल्या सोमवल्लिका ।
वत्सादन्यमृता देवी स्वरुहा चक्रलक्षणा ॥

---

1056. A. मूषिका, B. मेष्टिका for मेषिका. 1062. I. C. कच्चूरक for कच्छूरक. 1064 I BD. निकुटी for निष्कुटिः. 1065, I. BD. त्रिपुटी for त्रिपुटा.

छिन्नोद्भवा कुण्डलिनी विषघ्नी सा जयन्त्यपि ।
व्यालायुधं व्याघ्रनखं करजश्चक्रकारकः ॥
कृष्णवृन्ता कुबेराची [1]ग्रामीणासारकुञ्जरा ।
पुत्रजीवस्त्वचफलः[1] कुमारी तरुणी सहा ॥
देवी मूर्वा मधुश्रेणी [1]गोकर्णी मोरटा वसा[2] ।
मधूलिका तिक्तवल्का पीलुनी तेजनी च सा ॥
ऋत्तगन्धा त्वच्छगला मुसली तालमूलिका ।
प्रत्यक्श्रेणी[1] सुतश्रेणी द्रवन्ती शम्बरी वृषा ॥
चित्रोपचित्रा न्यग्रोधी रण्डा मूषिकपर्णिका ।
कपिकच्छूस्त्वात्मगुप्ता कण्डूरा[1] शूकशिम्बिका ॥
ऋश्यप्रोक्ताज[1]डाध्यण्डा मर्कटी प्रावृषायणी ।
शेफालिका तु निर्गुण्डी नीलिका सुवहा च सा ॥
सुमना मालती जातिः सप्तला नवमालिका ।
चण्डातकः शतप्रासः करवीरोऽश्वमारकः ॥
गणिका यूथिकाम्बष्ठा शीतभीरुस्तु मल्लिका ।
भूपदी ना वि[1]चकिलस्तृण[2]शूल्यं नपुंसकम् ॥

1077. 1. A. ग्रामीणोऽसारकुञ्जरा, B. ग्रामीणासारकुञ्जरौ. C. ग्रामीणोऽसारकुञ्जरौ, D. ग्रामीणौ सारकुञ्जरौ for ग्रायीणासारकुञ्जरा. 1078. 1. C. फला for फलः. '079. 1. D. गोकण्ठी for गोकर्णी; 2. BD. च सा for वसा. 1082. 1. B. प्रत्यक्च्छ्रेणी for प्रत्यक्श्रेणी. 1084. 1. A. शंखारा for कण्डूरा. 1085. 1. A- °जहध्यण्डा. C. °झटाध्यण्डा BD. °जटात्तण्डा for °जडाध्यण्डा. 1190. 1. AB. विचिकिलः for विचकिलः; 2 C. शून्यं for शूल्यं.

वनजा मल्लिकास्फोटा बन्धूको बन्धु[1]जीवकः ।
गन्धर्वहस्त एरण्ड उरुपूगो [1]व्यडम्बकः ॥
चञ्चुः पञ्चाङ्गुलामण्डौ रुबको वर्धमानकः ।
व्याघ्रपुच्छो हस्त[1]पर्णो वातघ्नस्तरुणोऽर्भकः ॥
वारुणी नाग[1]नन्दी स्याद्रे[2]वती रामदू[3]तिका ।
काकोली मधुरा शुक्ला कायस्था स्वादुमांसिका ॥
देवाह्वया सहादेवा गन्धमूली सुगन्धिका ।
वर्षाभूर्वर्षकेतुः स्याच्चक्रपत्रो विरोचनः ॥
खर्जूरी [1]रोषणः [2]क्षुद्रपरुषश्चिररोहकः ।
खरकायो नीलपत्रः खरपर्णः परूषकः ॥
परिमण्डलमध्यश्च [1]पद्मकं हेमपुष्पकम् ।
मधुपत्रं हिङ्गुपत्रं [1]कमलं शीतलं च तत् ॥
प्रह्लादिनी हंसपदी रक्तपादी त्रिपादिका ।
धृतराष्ट्री दीर्घपदी घृतमण्डा मधुस्रवा ॥
कालपुष्पी महामूला कालमाला सुगन्धिका ।
स्त्रस्थैन्द्री च महागोपी सैव कालानुसारिका ॥

---

1091 1. AC. जीवनः for जीवकः. 1092. 1. C. विडम्बकः for व्यडम्बकः. 1094. 1 BD. हस्तिवर्णः for हस्तपर्णः. 1095. 1. A. नागसंधी for नागनन्दी; 2. BD. रैवती for रेवती; 3. A. रामपूतिका for रामदूतिका. 1099. 1. A. रोफणः for रोषणः; 2. B. क्षुद्रपु°, C. क्षुद्रः पु° for क्षुद्रपरुषः. 1101. 1. C. पद्यकं for पद्मकं. 1102. 1. BD. कामलं for कमलं.

सूर्यपर्णी मुद्गपर्णी दासी मार्जारगन्धिका ।
वनजा[1] किङ्किणी शिम्बी पिशाची माष[2]पर्णिका ॥
महासहा सिंहविन्ना [1]मांसमाषा च पुष्टिका ।
पद्मपत्रा सुवर्णाभा चूर्ण[1]गर्भा किरातिका ॥
तिल्वकः[1] श्वेतपुष्पश्च श्वेतत्वक् तीक्ष्ण[2]गन्धकः ।
सोमवल्को महात्वक् स्यात् सोम[1]वृक्षश्च रोहिणी ॥
तैलपर्णी तैलपर्णः सोमवृक्षो हरिप्रियः ।
कुण्डली वृन्दफलिका तीक्ष्णपत्री च [1]चारिणी ॥
चतुष्कण्टकिनी चाथ रम्यकः सूर्यवल्लरी ।
आवर्तिनी रक्तपुष्पा त्रिभाण्डी पीतपीलुका ॥
महाज्वाला च कुष्ठघ्नी खरभूषः [1]सुगन्धिकः ।
सूक्ष्मभीरुर्मरुवकः खर[1]पत्रः स[2]रात्मकः ॥
कृष्णनिम्बः काल[1]शाकः कैडर्यः सुरभिश्च सः ।
अम्बिका मधुरा शीता विषघ्नी विषदूषिणी[1] ॥
कदम्बपुष्पी कच्छूघ्नी श्रमणी सैव मुण्डिनी ।
विपुष्पा [1]विफला विप्रा भङ्गी गुरुतरा सरा[2] ॥

---

1108. 1. B. धनजा for वनजा; 2. A. मूष for माष. 1109. 1. ABD. माषमासा for मांसमाषा. 1110. 1. A. चूर्णरम्भा, BD. पूर्णाभा च for चूर्णगर्भा. 1111. 1. A. तिल्लुकः, C. तिलकः for तिल्वकः; 2. BD. गन्धिकः for गन्धकः. 1112. 1. BDC. स्याद्रामवृक्षश्च for स्यात् सोमवृक्षश्च. 1114. 1. BD. वारिणी for चारिणी. 1117. 1. A. सुरान्धकः for सुगन्धिकः 1118. 1. BD. पात्रः for पत्रः; 2. A. सुरा° for सर °. 1119. 1. C. शाखः for शाकः. 1120. 1. D. भूषणी for दूषिणी. 1122. 1. AC. विपुला for विफला; 2. BD. रसा for सरा.

आदारी [1]दार्विका [2]दारी तीक्ष्णा हरितमञ्जरी ।
मरु[1]दघ्ना विश्वरूपा गन्धलक्ष्मीः कफावहा ॥
गाङ्गेरिका तु पित्तघ्नी कन्दमूला महारसा ।
कञ्चुका मूलकं क्लीबे महामूलकमित्यपि[1] ॥
गौलीरसाम्ल[1]मधुरा मोचकी गुड[2]मञ्जरी ।
सर्पदृष्टिः सदा[1]पुष्पो वसिरः पार्वतेयकः ॥
राजाक्षवः [1]कर्कशः स्यात् [2]कासारिर्वीतपुष्पकः ।
विषमुष्टिः श्वेतमुष्टिः केशमुष्टिश्च मुष्टिकः ॥
रक्त[1]मञ्जरिकाकान्तः कामुको भूकदम्बकः ।
लम्बूषो[1] [2]दक्षिणावर्तो वर्तनी च बृहत्फली ॥
पानीयवल्ली सुषवी सुवर्णकुसुमा त्वियम् ।
हिरण्या[1]रणिका राजी[2] बृहत्पुष्पातिकेसरा[3] ॥
तरुणी[1] रामतरुणी पूलिका नित्यपुष्पिका ।
काको[1]त्पलं कुवलयं कज्जले[2]न्दीवरं च तत् ॥

---

1123. 1. B. दारिका for दर्विका; 2. BD. दार्वी for दारी. 1124. 1. C. मल for मरु. 1126. 1. C. मूलक इत्यपि for मूलकमित्यपि. 1127. 1. B. गोलीरसाम्ल, C. गौलीसराम्ल, D. गोलीरसाम्र for गौलीरसाम्ल; 2. C. गन्ध for गुड. 1128. 1. AC. सदापुष्पा for सदापुष्पः. 1129. 1. BD. कर्कटेशः, C. कर्कटः स्यात् for कर्कशः स्यात्; 2. AC. कासारिः पीतपुष्पकः for कासारिर्वीतपुष्पकः. 1131. 1. C. रत्न for रक्त. 1132. 1. D. लम्बुकः for लम्बूषः; 2. C. दक्षिणावर्ता for दक्षिणावर्तः. 1134. 1. D. हिरण्य° for हिरण्या°; 2 BD. राजि, C राज्ञी for राजी; 3. BD. विकेसरा for °तिकेसरा. 1135. 1. AC. तरणी रामतरणी for तरुणी रामतरुणी. 1136. 1. A. कारो° for काको°; 2. BD. कज्जले नीवरं for कज्जलेन्दीवरं.

वननिष्पावकः[1] शिम्बी कुक्कुटी वनरञ्जिनी ।
काक[1]नासा तु काकाङ्गी जीवनीया शिरोरुहा ॥
पशुगन्धा बस्तगन्धा भृङ्गी परमस्रुरिका ।
सुरसा नाकुली रास्ना छ[1]त्राकी गन्धनाकुली ॥
नकुलेष्टा भुजंगाक्षी सुगन्धा श्वासमल्लिका[1] ।
प्रत्यक्पर्णी कीशपर्णी [1]किणिही खरमञ्जरी ॥
अपामार्गः शेखरिको धामार्गवमयुरकौ ।
गण्डीरं[1] भञ्जकं[2] चव्यं चविका[3] वृत्तपत्रिका ॥
पाण्डुपत्रा विशाला च कोलपिप्पलिका च सा ।
जटी तपस्विनी मांसी रोमशा जटिलामिषी[1] ॥
जिङ्गी[1] समङ्गा मञ्जिष्ठा विकसा कालमेषिका ।
वासा सिंही वैद्यमाता सिंहास्यो वासको वृषा ॥
आटरूषो वाजिदन्तो रोमशा जटिला वचा ।
तीक्ष्णोग्रगन्धा [1]षड्ग्रन्था मङ्गल्या वाजिगन्धिका ॥
शतपर्वा च पौलोमी सा तु हैमवती सिता ।
ऊषणा पिप्पली शौण्डी वैदेही मागधी कणा ॥
कृष्णोपकुल्या चपला कोलाथ वसिरः पुमान् ।
कपिवल्ली क्रोष्टुवल्ली श्रेयसी हस्तिपिप्पली ॥

---

1137. 1. BD. निष्पावकं for निष्पावकः. 1138. 1. A. रौक for काक. 1140. 1. C. छात्राकी for छत्राकी. 1141. 1. BD. वल्लिका for मल्लिका. 1142. 1. C. खरिणी for किणिही. 1144. 1. A. गम्भीरं for गण्डीरं; 2. C. गञ्जिकं, D. भण्डकं for भञ्जकं; 3. BD. जविका for चविका. 1146. 1. A. मषी for °मिषी. 1147. 1. BD. जङ्गी, C. जुङ्गी for जिङ्गी. 1150. 1. C. विड्गन्धा for षड्ग्रन्था.

क्षुद्रगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः ।
त्वक्पत्रं तु त्वचं चोचं वराङ्गं भृङ्ग[1]मुत्कटम् ॥
पृश्निपर्णी[1] पृथक्पर्णी प्रत्यक्पर्ण्यङ्घ्रिपर्णिका ।
लाङ्गूली च गुहा चाथ सा दीर्घा चित्रपत्रिका ॥
सिंहपुच्छा फेरुविन्ना चित्राङ्घ्रिः क्रोष्टुमेखला ।
ग्रीष्महृद्या त्वधःपुष्पी कट्वङ्गी व्रणनाशिनी ॥
कपित्थपत्रिका चाथ मत्स्याक्षी सोमवल्लिका ।
एकाष्ठीला पाप[1]चेली स्थापनी वनतिक्तका ॥
पाठाम्बष्ठा विद्ध[1]कर्णी प्राचीना श्रेयसी [2]रसा ।
विश्वा विषा शुक्लगन्धोपविषाति[1]विषारुणा ॥
तत्र प्रतिविषा घण्टारवा तु शणपुष्पिका ।
काक[1]चिञ्चा च[2] विक्रोडा गुञ्जा चूडामणिर्वरा ॥
शाङ्गेष्ठा कृष्णला दत्ता जङ्घा तिक्ता च रक्तिका ।
मधुस्रवा तु सा शुक्ला दहनाह्वस्तु चित्रकः ॥
पाठी ज्वाली दीपकं च कुष्ठघ्नी जघनेफला ।
काकमाची बहुफला सर्वतिक्ता च वायसी ॥
सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ।
त्रिभाण्डी रोचनी गोधापदी च सुवहा समे ॥

---

1156. 1. B. शृङ्गम् for भृङ्गम्. 1157. 1. AC. पर्णा for पर्णी. 1162. 1. C. पापचोली for पापचेली. 1163. 1. B. वित्त, C. सिद्ध for विद्ध; 2. AC सरा. for रसा 1164 1. BD. त्रिविषा for °तिविषा. 1166. 1. A. om. ॥. 1166 & 1167; 2. C. कपिक्रोडा for च विक्रोडा.

गोपी तु शारिबा श्यामा नागजिह्वा सुगन्धिका ।
सेवनीया च कृष्णा सा स्यादेवोत्पलशारिबा ॥
ताम्बूलवल्ली ताम्बूली भुजंगलतिका च सा ।
ऋश्यप्रोक्ताभीरुपत्री[1] शतमूली शतावरी ॥
नारायणी बहुसुताभीरु[1]रिन्दीवरी वरी ।
वेणी खरा गरी देवताली जीमूत इत्यपि ॥
लज्जालुस्तु नमस्कारी कदल्यञ्जलिकारिका ।
गण्डकाली[1] कदल्यां तु लज्जालुश्च[2] शमीफला ॥
अशोका[1] रोहिणी कृष्णा भेदिका कटुरोहिणी ।
कटुः कटुंभरा तिक्ता चक्राङ्गी शकुलादिनी ॥
ह्रीबेरशालकोदीच्यबर्हिष्ठानि वराङ्गकम्[1] ।
केशाम्बुनामकं वीरतृणं[1] स्याद्वीरणः पुमान् ॥
मूलेऽस्योशीरमस्त्री स्यादवदाहं जलाशयम् ।
लामज्जं नलदं [1]सेव्यममृणालं वरा[2]भये ॥
आह्लादनं लघुलयमिष्ट[1]कापथ[2]मित्यपि ।
अन्नसंज्ञा बला वाट्या वाट्याङ्गो हेमपुष्पकः ।
पुष्पवीर्या त्वतिबला सहा भद्रा बलेत्यपि ।
भारती तुलसी सेव्या पालिनी[1] विष्णुवल्लभा ॥

---

1176. 1. BD. पर्णी for पत्नी. 1177. 1. CD. °भेरु for °भीरु. 1180. 1. B. गन्धकाली for गण्डकाली; 2. A. लज्जालुस्तु, C. लज्जाल्वश्च for लज्जालुश्च. 1181. 1. BD. अशोकः for अशोका. 1183. 1. BD. वराङ्गकः for वराङ्गकम्. 1184. 1. BD. वीरतृणः for वीरतृणं. 1186. 1. BD. सेध्यं for सेव्यं; 2. BCD. विरा° for वरा°. 1187. 1. B. इष्टिका for इष्टका; 2. A. पदम् for पथम्. 1190. 1. C. फलिनी for पालिनी.

प्रसारिणी चन्द्रवाला सारिणी[1] च कटंभरा ।
सोमराजी सोमवल्ली वागुजी वसुमल्लिका ॥
कालमेषी कृष्णफली[1] पूतिफल्यथ वृश्चिकः ।
सर्पदंष्ट्रा [1]धूमपुष्पी विषघ्नी वृश्चिकच्छदा ॥
दासी षडश्रा शार्ङ्गेष्ठा[1] काकजङ्घा विलोमिका ।
पुनर्नवा तु शोफघ्नी वर्षाभ्वी जीवबोधिनी ॥
सा तु शुक्ला वृश्चिकः स्यात् सा तु कृष्णा कठिल्लकः[1] ।
किणिही शीतला मैत्री प्रत्यक्श्रेण्यपराजिता ॥
परास्फोता चाश्वखुरी श्वेतायामत्र[1] वारिणी[2] ।
गिरिकर्णीगवादिन्यौ नीलायां स्थूलपुष्पिका ॥
तिष्यान्ता[1] तु लघुः स्पृक्का लतालंकारिका मरुत् ।
मरुन्माला[1] च पिशुना श्वदंष्ट्रा स्वादुकण्टका ॥
इक्षुगन्धा दुष्प्रधर्षाफला सिंही फलंकषा ।
गोकण्टको गोक्षुरकः पुंसि तत्र त्रिकण्टकः ॥
निशाह्वा सुवहा[1] पीता हरिद्रा वरवर्णिनी ।
शृङ्गी समङ्गा मञ्जिष्ठा विकसा कालमेषिका ॥

---

1191. 1. C. धारिणी for सारिणी. 1193. 1. C. फला for फली. 1194. 1. AC. धूप for धूम. 1195. 1. A. शागाष्ठा, C. शार्ङ्गिष्ठा, D. शार्ङ्गोष्ठा for शार्ङ्गेष्ठा. 1197. 1. A. करिल्लकः, C. कलोलुकः for कठिल्लकः. 1199. 1. BD. श्वेतायां मातृवारिणी for श्वेतायामत्र वारिणी; 2. C. वारुणी for वारिणी. 1201. 1. A. निष्ठ्यान्ताथ, C. निष्ठ्यन्तोऽथ, D. तृष्यन्ता तु for तिष्यान्ता तु. 1202. 1. C. मरुमाला for मरुन्माला. 1205 1. BD. सुमहा for सुवहा.

दार्वीदारुहरिद्रे[1] तु हेमकाष्ठा कटंकटा ।
कटंकटेरी पर्जन्या कालेयकहरिद्रवौ ॥
ज्योतिष्मती पूतितैला पारावतपदीङ्गुदी ।
तेजोवती किङ्किणिका जीवन्ती स्फुटवल्कला[1] ॥
क्षुद्रश्वेतकटभ्यौ तु सुनागो[1] बहुकण्टकः ।
महाश्वेता शतपदी किणिही शोफनाशिनी ॥
शिरीषपत्री पौण्ड्री च शोणपर्णस्तु[1] तापसः ।
इङ्गुदोऽङ्गारकश्चारपुण्ड्रः पाटलपुण्ड्रकः ॥
उरणाख्यस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः ।
प्रपुन्नाडः समाने तु शार्ङ्गष्ठाचर्मपर्णिके ॥
अजमोदा बस्तगन्धा ब्रह्मदर्भा[1] यवानिका ।
स्वर्णक्षीरी हैमवती पटुपर्णी हिमावती ॥
विशल्या शक्रपुष्प्यग्निशिखानन्ता फलिन्यपि ।
पूगस्तु मलपुष्पः स्याद्वसुकः किण्वमूलकः ॥
अमी समाः स्युः पर्णासकुठेरककठिञ्जराः[1] ।
शुक्लेऽस्मिन् मञ्जरी तीक्ष्णतीक्ष्णगन्धार्जकाः समाः ॥
अस्मिन् सुगन्धे स्याच्छ्वेतसुरसा सुरसापि च ।
मण्डूकपर्णिका भण्डी भण्डीरी[1] चाथ पालकम् ॥

---

1207. 1. BD. हरिद्रा for हरिद्रे. 1210. 1. BD. वल्लभा for वल्कला. 1211. 1. C. सुनासः, D. सुनाकः for सुनागः. 1213. 1. AC. वर्णस्तु for पर्णस्तु. 1217. 1. BD. गर्भा for दर्भा. 1221 1. A. करिञ्जराः for कठिञ्जराः. 1224. 1. A. भाण्डीरं, B. मण्डीरी, D भाण्डीरी for भण्डीरी.

1225 व्याप्यं कुष्ठं पारिभाव्यमुत्पलं व्याधिरित्यपि ।
वृषा तु वृषभः भृङ्गी पालक्यां कुन्दकुन्दुरू[1] ॥
प्रस्थपुष्पो मरुवकः समीरणफणिज्जकौ ।
कपोताङ्घ्रिस्तु सुषिरा नटी विद्रुमवल्लरी ॥
शङ्खिनी केशिनी चोरपुष्पिका[1] शङ्खपुष्पिका ।
1230 मुरा गन्धकुटी दैत्या सालपर्ण्यश्वगन्धिका ॥
कबरा खरपुष्पासृग्गन्धिकाथ विदारिका ।
भूकूश्माण्डीक्षुगन्धा च सा तु कृष्णा फलाधिका ॥
1232a उष्ट्रिका क्षीरशुक्ले[1]क्षुगन्धिकेक्षुविदारिका[2] ।
श्वेता क्षीरविदारी सा[1] महाश्वेतर्क्षगन्धिका ॥
वार्ताकी हिङ्गुली[1] सिंही भण्टाकी[2] दुष्प्रधर्षिणी ।
1235 हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ॥
माषपर्णी तु काम्बोजी[1] यवपुष्पा महासहा ।
रास्ना तु सुवहा युक्त[1]रसैलापर्णिका च सा ॥
किराततिक्तो भूनिम्बः शार्ङ्गेरी त्वम्ललोणिका[1] ।
अम्बष्ठा चुक्रिका दन्तशठा चाथ कलम्बिका ॥
वायसी शतपर्वाथ नदी विद्रुमवल्लिका ।
1240 सुषिरा च कपोताङ्घ्रिरतिच्छत्रा तु कारवी ॥

---

1226. 1. D कुन्दरू for कुन्दुरू. 1229. 1. BD. शोकपुष्पिका for चोरपुष्पिका. 1232a. 1. A. शुक्लेषु for शुक्लेक्षु; 2. C. deletes l. 1232a 1233. 1. C. स्यात् for सा. 1234. 1. B. हिङ्गुदी for हिङ्गुली; 2. BD. भण्डारी for भण्टाकी. 1236. 1. A. कुम्भोजी, D. काम्भोजी for काम्बोजी. 1237. 1. BD. युक्ता for युक्त. 1238. 1. B. लोहिका, C. शोणिका for लोणिका.

सितपुष्पी सितच्छत्राऽत्राक्पुष्पी मधुरा कणा ।
मधुका[1] यष्टिमधुकं क्लितकं मधुयष्टिका ॥
भूवल्लूरमिला[1] छत्रं कुक्कण्डं भूमिकन्दकम् ।
चारटी सव्यथा पद्मातिचरा[1] पद्मचारिणी ॥
पुण्डरीकं दमनकं सलज्जं दारुवन्मुनिः ।
तत्र ब्रह्मजटा च स्यादलर्कः सिंहवल्लरी ॥
कण्टकारी तु बृहती वार्ताकी दुष्प्रधर्षिणी ।
सिंही कण्टकिनी क्षुद्रा कार्पासी तुण्डिकेरिका ॥
जपा तु [1]रक्तकार्पासी समे कार्पासबादरे ।
तुण्डिकेरी तु बिम्बी स्याद् बम्बिो बिम्बा च तत्फले[1] ॥
कुस्तुम्बुरु तु धान्याकं तत्र छत्रा वितुन्नकम् ।
कोशातकी पटोली स्यात् पटोलः कर्कशः पटुः ॥
घण्टाला तु कृतच्छत्रा ज्योत्स्नी कोशातकी फली ।
ग्राम्या मृदङ्गफलिका जालिनी फ[1]लिनीत्यपि ॥
राजजाली महाकोशातकी च फलिकेति च ।
कर्कोटी कोशफलिका क्ष्वेडोऽधोमार्गत्रोऽप्यसौ ॥
महाजाल्यां कोशफलो वन्ध्या तिक्तपटोलिका ।
जाङ्गा[1]दीप फली चाथ कारवेल्लः कठिल्लकः ॥

---

1243. 1. A मधूका for मधुका. 1244. 1. ABD. वल्लूरमही for वल्लूरमिला. 1245. 1. BD. त्रिचरा for °तिचरा. 1250. 1. C. रक्ता for रक्त. 1251. 1. B. deletes ll. 1251[b], 1252 and 1253a and adds: 1253b after 1251a. 1255. 1. D. प्ठनी for फलिनी. 1259. 1. BD. जीवफली for दीपफली.

राजवल्ल्युरुवल्ल्यम्बुवल्ली रञ्जनवल्लिका ।
सुषवी तिक्तपत्री च कर्कोटस्तु युगंधरः ॥
हस्तिकर्कोटकश्चैव[1] बृहत्कर्कोटको बली[2] ।
अर्शोघ्नः सूरणः कन्दः [1]कूष्माण्डस्तु नृपात्मजः[2] ॥
हेमपुष्पस्तिष्यफलः कर्कारुस्तिष्यवल्लरी ।
कूष्माण्डी[1] तिष्यफलिका कटुतुम्ब्यां[2] नृपात्मजा ॥
लम्बा तुम्बवतीक्ष्वाकुस्तिक्त[1]बीजो महाफलः ।
तुम्ब्यां पिण्डफलालाबू[1] वृत्ततुम्ब्यां तु कम्बुका ॥
अल्पतुम्ब्यां कुक्कुटाक्षः समौ [1]कर्करिचित्रकौ ।
उर्वारुः कर्कटी भीरुर्वालकी चिर्भटः[1] पुमान् ॥
त्रपुसश्छर्दनस्तालः[1] [2]कुटपत्री च मूत्रला[3] ।
पाण्डुपत्री विशाला[1] स्यादमरी चेन्द्रवारुणी ॥
मृगोर्वारुस्तिक्तफली विचित्रफलिका च सा ।
अथो गवाक्षी गोतुम्बी कलिङ्गश्चित्रकोऽपि च ॥
कदली वारण[1]बुसा[2] रम्भा मोचांशुमत्फला ।
काष्ठीला दीर्घपत्रा च सा तु चम्पा[1] सितेतरा ॥

---

1262. 1. BD. चोभौ for चैव; 2. BD. बृहत्कर्कोट इत्यपि for 1262b. 1263. 1. ABC. कूश्माण्डः for कूष्माण्डः; 2. A नृपात्मभूः for नृपात्मजः. 1265. 1. BD. कूश्माण्डी for कूष्माण्डी; 2. AC. करतुम्ब्यां for कटुतुम्ब्यां. 1266. 1. C. तिष्य for तिक्त. 1267. 1. BD. °लाबुः for °लाबूः. 1268. 1. C. कर्करु for कर्करि 1269. 1. C. चित्पटः for चिर्भटः. 1270. 1. A. तूलः for तालः; 2. D. कूट for कुट; 3 यात्रला for मूत्रला. 1271. 1. ACD. विशाल्या for विशाला. 1274. 1. AC. वरुण for वारण; 2. B. बुधा for बुसा. 1275. 1. A. चम्पासितोत्तरा for चम्पा सितेतरा.

वार्ताकी प्रसवा[1] काली बृहती दुष्प्रधर्षिणी ।
वातिङ्गनस्तु गान्धारी वार्ताकी हिङ्गुलीङ्गुली[1] ॥
वात्या बृहत्यां सुस्कन्धा धन्या प्रसहनी लता ।
गोष्ठवातिङ्गने त्वेलागन्धिका जलजम्बुका ॥
हस्तिवातिङ्गने त्विभ्या विशाला दद्रुनाशिनी ।
मारिषो जीवशाकः स्यात् स्वल्पेऽस्मिंस्तण्डुलीयकः ॥
मेघनादश्च गण्डीरं रक्तेऽस्मिन् देवमारिषः ।
वरो लतामारिषः स्याद्वरशाकश्च शाकिनी ॥
सृगालवास्तुके[1] त्वारुर्वास्तुके[2] त्वारपत्रकः ।
प्रवालो वीरशाकश्च वास्तिकः शोफकर्शकः[1] ॥
रोदनी कच्छुरा नक्रा ताम्रमूला दुरालभा ।
यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ॥
द्रोणस्तु द्रोणिका छत्रा चक्षुष्या द्रोणपुष्पिका ।
जीरको जरणो[1] ह्यद्योऽजाजिः[2] कृष्णे तु जीरके ॥
कालोपकुञ्चिका पृथ्वी सुषवी कारवी कणा ।
सर्षपो दुन्दुभस्तीक्ष्णो रक्षोघ्नो दुष्प्रधर्षणः ॥

---

1276. 1. A. प्रसभा for प्रसवा. 1277. 1. A. हिङ्गुली फली, BD. हिङ्गुलीगुली for हिङ्गुलीङ्गुली. 1284. 1. BD. सृगालकास्तु केत्वारुः for सृगालवास्तुके त्वारुः; 2. BD. वास्तुको for वास्तुके. 1285. 1. A. शूकपित्रकः, BD. शोकशत्रुकः for शोफकर्शकः. 1289. 1. AC. जीरणः for जरणः; 2. BD. °ऽजाजः for °ऽजाजिः.

कदम्बकश्च कटुकः सिद्धार्थः श्वेतसर्षपः ।
रक्षोघ्नश्च गृहघ्नश्च[1] कलम्ब्यां[2] स्यादुपोदका[3] ॥
समष्ठिला च गण्डीरं[1] शक्रुटो दलकूर्चिका ।
बृहच्छदो महापद्मः[1] शोफघ्नो मोह इत्यपि ॥
वराहकन्दे[1] वाराही कन्दलः कन्दली स्त्रियाम् ।
मध्वालुको[1] मधुरसः कालाची[2] नूतकन्दलम् ॥
विष्वक्सेना तु बदरा वराङ्गी वज्रवल्लरी ।
त्र्यश्रा गृष्टिः प्रिया नागबला गाङ्गेरुकी[1] समे ।
कूर्चशीर्षो मधुकरो ह्रस्वाङ्गः शृङ्गिजीवकौ ।
ब्रह्मर्या सत्यवती ब्राह्मी मत्स्याक्षी सोमवल्लिका[1] ॥
पर्पटः पटुकोऽथास्त्री मूलकं[1] हिलकूर्चिका ।
झटा[1]मलाज्झटो ताली शिवा तामलकीत्यपि ॥
वार्षिकं[1] त्रायमाणः[2] स्यात् त्रायन्ती बलभद्रिका ।
रसोनो[1] गृञ्जनोऽरिष्टः पलाण्डुरमृतोद्भवः ॥

---

1293. 1. BD. कृतघ्नः for गृहघ्नः; 2. A कदम्ब्यां for कलम्ब्यां; 3. C. स्यादुपोदकी for स्यादुपोदका. 1294. 1. B. समष्ठिलाजगण्डीरः for 1294a. 1295. 1. D. पार्थः for पद्मः. 1296. 1. B. बलाहकं देवराही for 1296a. 1297. 1. A. मद्बलाकः D. मयालकः, BC. मध्वालकः for मध्वालुकः; 2. A. कालची नूतकन्दलम्, D. कालाचीन्तुतनन्दलम्, B. कलाचीन्नूतनं दलम् for 1297b. 1299. 1. AC. गाङ्गेरुकी, B. काङ्गेरके, D. काङ्गेरुकी for गाङ्गेरुकी. 1301. B. वल्लरी for वल्लिका. 1302. A. यालकं for मूलकं. 1303. 1. BD. झटामूला, C. झटामूली for झटामला. 1304. 1. D. ब्राह्मिकं for वार्षिकं; 2. C. त्रायमाणं for त्रायमाणः. 1305. 1. BD. रसोना for रसोनः.

सुकन्दकः कटुः कञ्जो[1] महाकन्दो महौषधम् ।
कायाङ्गं लशुनं दीप्यं जीर्णकं गुल्मनाशनम् ॥
सुकन्दकः श्वेतकन्दः पलाण्डुश्च समा इमे ।
हरिद्रक्ते स्वल्पकन्दो गृञ्जनो गर्जनो गजः ॥
हरितेऽस्मिन् लतार्कः स्यात् परुण्डो[1] दद्रुमोऽसमः ।
लशुनं दीर्घपत्रं च पिच्छगन्धो महौषधम् ॥
परुण्डुश्च पलाण्डुश्च लतार्कश्चापराजिता ।
गृञ्जनो यवनेष्टश्च पलाण्डोर्दश जातयः ॥
आर्द्रकं शृङ्गिवेरं स्याच्छ्यामिका कालकेशिका ।
विशल्या लाङ्गली[1] विद्युद्रक्तपुष्पानलाङ्गिका ॥
त्वक्सारस्तेजनो वंशस्त्वचिसारस्तृणध्वजः ।
मृत्युपुष्पो यवफलो वेणुः कर्मारमस्करौ ॥
शतपर्वाप्यथ[1] क्ष्वेलः करीरोऽस्त्री तदङ्कुरः ।
कीचका वेणवस्ते ये स्वनन्त्यनिलपूरिताः ॥
नालिकेरो द्वयोः कूर्चकेसरो लाङ्गली हली ।
सदाफलो दाक्षिणात्यो बलिसेव्यः कलिङ्गकः ॥
मधुक्षीरो मधुरसः खर्जूरः पुंसि च[1] स्त्रियाम् ।
कूर्चपुष्पोऽपि तालस्तु राजतालो दृढच्छदः ॥

---

1306. 1. A. खञ्जः, B. खजः, C. खण्डः for कञ्जः. 1310. 1. BD. स्याद्वरुणः for स्यात् परुण्डः. 1315. 1. C. लाटिली for लाङ्गली. 1318. 1. C. पृथक् for °प्यथ. 1322. 1. BCD. क्षुः स्त्रियाम् for च स्त्रियाम् ।

तारो[1] वराङ्गना ताली राजताल्यथ केतकी ।
केतकोऽपि रजःपुष्पः स्त्रीप्रियः सर्पवेष्टितः ॥
खर्जूरः केतकी पूगो हिन्तालो नालिकेरकः ।
तृणवृक्षाः प्रियालः स्यादिक्षुः [1]खड्गदलो मधुः ॥
तस्मिन्मधुतृणं भेदा वंशकान्तारपुण्ड्रकाः ।
मत्कुटः[1] सूक्ष्मपत्रः स्याद्दीर्घलोहितयष्टिका ॥
गुच्छो वृत्ततृणः शुण्ठी शृङ्गिबेरार्हमूलकः[1] ।
शरेक्षुरिक्षुकुसुमः पिकेक्षुर्गिरि[1]कर्णिका ॥
तस्मिन् काण्डेक्षुकाशेक्षू अपि चामरपुष्पकः ।
शादस्तु घासो यवसं तृणं हरितमर्जुनम् ॥
तृण्या तु तृणसंघाते [1]शाद्वलं तु तृणाङ्कुरे ।
पुञ्जीलस्तु तृणस्तम्बः शष्पं बालतृणं समे ॥
कुशो [1]मुनिः कुथो[2] दर्भः क्लीबे बर्हिः पवित्रके ।
मुञ्ज[1]स्तु यज्ञियो मेध्यो मृदुत्वग्ब्रह्ममेखला ॥
अश्ववालस्तु दर्भः स्यात् काशोऽस्त्री स्त्रीक्षुगन्धिका ।
समाः काशः शरो मुञ्जो दर्भभेदे खर[1]च्छदः ॥
ऊर्ध्वमूलोलपौ चास्मिन् जूर्णा कुकण[1]पत्रिका ।
नडादिकं तृणं गर्मुच्छ्यामाकप्रमुखा अपि ॥

---

1324. AC. तालः for तारः. 1327. 1. B. खण्ड for खड्ग. 1329. 1. AC. मत्कटः, B. मक्कुटः for मत्कुटः. 1330. 1. A. °भमूलका', C °गमूलकः for °र्हमूलकः. 1331. 1. A. कर्णकौ for कर्णिका. 1334. 1. C. शाड्वलं for शाद्वलं. 1336. 1. C. मुनिकुथः for मुनिः कुथः; 2 AD. कशः for कुथः. 1337. 1. BD transp. ll. 1349 & 1350 after l. 1353. 1339. 1. A. शर for खर. 1340 1. BD. जूर्णा तु कुणपत्रिका; C जूर्णा तु कण° for 1340b.

नडस्तु धमनः पोटगलो नड्या तु तद्गणे ।
सौगन्धिकं देवजग्धं [1]कत्तृणं धा[2](ध्या?)मकं पुरम् ॥
गुन्द्रः[1] शरस्तेजनः स्यादि[2]षीका कूलिका[3] समे ।
छत्राकश्छत्रपालघ्नौ पुंसि भूम्नि च बल्व[1]जाः ॥
दूर्वा तु हरिताली स्याच्छत[1]वीर्या च भार्गवी ।
सितदूर्वा तु गोलोमी श्वेताङ्गी शतमूलिका ॥
मुस्ता स्त्री मुस्तकोऽस्त्री स्याच्छ्वेतमध्यः[1] सुगन्धिकः ।
शकलाक्षः[1] कर्णपूरो ग्राही कर्पूरगन्धिकः ॥
कुटन्नटं दाश[1]पुरं गोनर्दं जलमुस्तके ।
कैव[1]र्तीमुस्तकः गुन्द्रा दरारोहा महोदरी ॥

इति वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
वनाध्यायो द्वादशः ॥

—— :※: ——

# १३

## चतुष्पदाध्यायः

सिंहः पञ्चमुखो हरिर्मृगपतिः कण्ठीरवः केसरी
हर्यक्षो नखरायुधोऽथ [1]कुठरः स्यादल्पकण्ठीरवः ।

---

1343. 1. BD. तृणकं for कत्तृणं; 2. A. दामकं पुरं, BCD. धामकम्बुरम् for धामकं पुरम्. 1344. 1. B. इन्द्रः for गुन्द्रः; 2. B. स्यादीषिका for स्यादिषीका; 3. ACD. त्वलिका for कूलिका. 1345. 1. BD. बल्बदाः for बल्वजाः. 1346. 1. A. स्याच्छत्र for स्याच्छत. 1348. 1. D. मध्ये for मध्यः. 1349. 1. A. शशलक्ष्णी, C. कुशलाक्षः for शकलाक्षः. 1350. 1. A. पूरं for पुरं. 1351. 1. A. कैवर्त for कैवर्ती. 1352. 1. A. कुठरुः for कुठरः.

सिंहारिः शरभोऽष्टपादथ समाः शार्दूलपिण्डारक—
व्याघ्रद्वीपितरक्षुचित्रतनवः स्युः पुण्डरीकोऽप्यमी ॥
वराहः सूकरः क्रोडः कोलभूदारघोणिनः ।
घृष्टिः कि[1]टिः किरिर्दंष्ट्री स्तब्धरोमा च पोत्रिणि ॥
समा लुलायमहिषकासराश्वारिसैरिभाः ।
गवलं माहिषं शृङ्गं द्वैपं वैयाघ्रचर्मणि ॥
ऋक्षोऽच्छभल्लो भल्लूको भल्लुकोऽप्यथ गण्डकः ।
खड्गी [1]वाध्राणसः खड्गस्तच्छृङ्गे खड्गमस्त्रियाम् ॥
श्वावित् शल्योऽस्य लोम्नि स्त्री शलली शललं शलम् ।
मृगः कुरङ्गो वातायुरेणो हरिण इत्यपि ॥
कृष्ण[1]सारः कृष्णमृगः समौ गवयगोमृगौ ।
लम्बन्ते यस्य रोमाणि ककुदि स्यात् स शम्बरः ॥
ऋश्यस्त्रिशृङ्गो नीलः स्याद्रोहिदृश्यस्य योषिति ।
सारङ्गो रोम[1]कल्माषः कर्णयोर्यो गवाकृतिः ॥
स गोकर्णोऽसितो रामो रोहिषो गर्दभाकृतिः ।
न्यङ्कुस्तु शम्बराकारस्त्रिकेण[1] विपुलोन्नतः ॥
राजीवो राजिमान् पृष्ठे कृष्णसारो महान् रुरुः ।
शोणास्यो[1] राजयः पृष्ठे यस्य सन्ति स रोहितः ॥

---

1355. 1. BD. किरिः किटिः for किटिः किरिः. 1359. 1. C. वाच्छ्राणसः for वाध्राणसः. 1362. 1. C. transp. ll. 1362—1371 between ll 1369 & 1370. 1365. 1. BD. कन्माषः for कल्माषः. 1367. 1. C. त्रिकोण for त्रिकेण. 1369. 1. C. रोम्णा तु for शोणास्यः.

प्रियको [1]मसृणस्वच्छमृदुचित्रतनूरुहः ।
चमूरुरायतग्रीवो धवलस्कन्धकेसरः ॥
नीला[1]ग्रमृदुतीक्ष्णोच्चकर्बुराङ्गतनूरुहः ।
द्वाविंशत्यङ्गुलायामा कदली स्त्री बिलेशया ॥
पृषतो बिन्दुचित्राङ्गः [1]कन्दली तु महोदरी ।
श्यामा हस्तसमायामा कोक ईहामृगो वृकः ॥
सालावृकस्त्वरण्यश्वा टङ्कणो धवलोन्नतः ।
समूरुर्ना [1]समूना स्त्री सा[2] प्रहस्तायताकृतिः ॥
गोमाय्वाभाथवा कृष्णा स्निग्धोच्चमृदु[1]रोमिका ।
श्यामिका तु श्वेतबिन्दु[1]श्यामला षोडशाङ्गुला ॥
चतुरा तु घनस्निग्धरोमा श्यामा सचन्द्रका ।
वातप्रमीर्वातमृगश्चीनस्तु त्रिंशदङ्गुलः ॥
मरुजा[1] तू[2]च्चमसृणमृदुपाण्डररोमिका[3] ।
रोमराजिमती मध्ये द्वादशाङ्गुलसंमिता ॥
रङ्कुः स यस्य रोमाणि युज्यन्ते वायुकर्मणि ।
चमरस्तु[1] सितो वालमृगोऽथ सृमरोऽसितः ॥
एण्याश्चर्माद्यमैणेयं मार्गैणे तु मृगैणयोः ।
चीनकस्तु सित[1]क्रोडः कन्दरस्तूच्चजानुकः ॥

---

1370. 1. BD. मसृणः for मसृण. 1372. 1. A. नीलाच्चः, C. नीलङ्ग for नीलाग्र. 1374. 1. AC. कदली for कन्दली. 1377. 1. A. समारुर्ना समाना स्त्री for 1377a; 2. A. सार्धहस्ता°, C. सा प्रशस्ता° for सा प्रहस्ता°. 1378. 1. AC. रोमका for रोमिका. 1379. 1. C. बिन्दुः for बिन्दु. 1382. 1. A. मारुजा, BD, मनुजा for मरुजा; 2. BD. कूर्च for तूच्च; 3. AC. रोमका for रोमिका. 1385. 1. BD. चरमस्तु for चमरस्तु. 1387. 1. BD सितः for सित.

समानौ बभ्रुनकुला[1]वच्छकर्णशशौ[2] समौ ।
मृगनाभिस्तु[1] कस्तूरीमृगो गन्धमृगोऽपि[2] सः ॥
नाहलोऽप्यथ कस्तूरी राजार्हं शितिचन्दनम् ।
वनौका मर्कटः कीशो वानरः प्लवगः कपिः ॥
प्लवंगमो दधिमुखः शाखामृगवलीमुखौ ।
गोलाङ्गूलः कृष्णमुखो दीर्घपुच्छो वलीमुखः ॥
शिवा स्त्री जम्बुकक्रोष्टु[1]फेरुफेरण्डफेरवाः ।
गोमायुर्वञ्चको[1] भीरुभूरिमायशृगलकाः ।
मातङ्गः करटीभवारणकरिस्तम्बेरमानेकपाः
शुण्डालद्विपहस्तिनागमदमु[1]क्शूर्पश्रवःकुञ्जराः ।
वेतण्डद्विरदौ महाबलगजौ दन्तावलः सिन्धुरः[1]
पद्मी सामभवो रदी च करिणः कुम्भौ शिरःपिण्डकौ ॥
पद्मानि स्युर्बिन्दवोऽन्नं विधानं
शुण्डा हस्तश्चूलिका[1] कर्णमूलम् ।
स्यान्निर्याणं दृष्युपान्तः करीरं
दन्तादिः[1] स्याद्दन्त[2]भागोऽग्रभागः ॥
हस्तस्याग्रं पुष्करं वक्त्रमध्यं
वाहित्थं[1] स्यादीपिका नेत्रकूटम् ।

---

1388. 1. C. अज for अच्छ; 2. BD. तृणौ for शशौ. 1389. 1 C. नाभस्तु for नाभिस्तु; 2. A. मृगो हि for मृगोऽपि; C. trans. ll. 1362–1371 after l. 1389. 1394 1. C. भेरुभेरण्डभेरवाः for 1394b. 1395. 1. BCD. गोमायुवञ्चका° for गोमायुर्वञ्चकः. 1396. 1. BD. मदमुत् for मदमुक्. 1397. 1. C. सिन्दुरः for सिन्धुरः. 1398 1 B. चूर्णिका for चूलिका. 1399. 1. BD. दन्तान्तः for दन्तादिः; 2. BD. स्यादन्त for स्याद्दन्त.

आरत्तोऽधः कुम्भयोरासनं तु
स्कन्धोद्देशः कुम्भमध्यं[1] विदुर्ना ॥
निष्कोशः स्यात् कुक्षिमध्ये हनौ ना
कुञ्जः कर्णप्रान्तरे दुर्दरः[1] स्यात् ।
उत्खातः स्यात् कर्णमूलोर्ध्वभागे
शम्बूका स्त्री[1] वक्त्रपार्श्वैकदेशः ॥
बिम्बकस्तु शिरोमध्यं ललाटं[1] स्यादवग्रहः[2] ।
पत्तपार्श्वे[1] तु विक्षोभः प्रतिमानं तु कुम्भयोः ॥
अधोभागे (अन्तराले ?) मदो दानं गण्डस्तु करटः कटः ।
दन्तो रदो विषाणं च वमथुर्हस्तशीकरः ॥
गात्रापरे[1] क्रमात् पूर्वापरजङ्घादिदेशयोः ।
पूर्वस्याङ्घ्रेरधोऽधः स्युः प्रतीकाशः[1] चयः क्रमात् ॥
कूर्मः सन्दानभागश्च प्रोह उत्सङ्ग इत्यपि ।
अधोऽधः पश्चिमस्याङ्घ्रेर्मूलादानखरावधेः ॥
प्रदेशाः स्युः कलाभागः क्रमाज्जघनपिण्डिका ।
मण्डूका[1] शकुटा पार्ष्णिस्तलः प्रोहश्च कूर्मकः ॥

---

1401. 1. BD. मध्या for मध्यं. 1402. 1. BD. दुर्दुरः for दुर्दरः. 1403. 1. BD. स्याद्वक्त्र° for स्त्री वक्त्र. 1404. 1. B. ललाटः for ललाटं; 2. A स्यादुपाग्रहः for स्यादवग्रहः. 1405. 1. D. पार्श्वौ for पार्श्वे. 1408. 1. BD. गात्रात्परे for गात्रापरे. 1409. BC. प्रतिकाशः for प्रतीकाशः. 1413. 1. AD. मण्डूकी for मण्डूका; 2. BD कूर्मकम् for कूर्मकः.

पक्षभागः पार्श्वभागो भेदः स्थूलोच्चयो[1] गतेः ।
तत् फलं त्वंसयोर्मध्यं[1] विस्तारो गजशास्त्रकम् ॥
जानुदेशस्त्ववस्कारः शुण्डायां स्रोत इत्यपि ।
कक्ष्या चूडा(षा ?) वरत्रा स्याद्धेनुका करिणी वशा ॥
वाशिता गणिका रोगे गजानां कूटपाकलः[1] ।
मदविभ्रमजं तेजः करिणो हस्तिवर्चसम् ॥
शृङ्गारोऽलंक्रिया तोत्रं वेणुकं कदली[1] ध्वजः ।
आलानं बन्धनस्तम्भे कीलशङ्कुध्रुवाः समाः ॥
सृणिर्द्वयोरङ्कुशोऽस्त्री स्रना दण्डार्पितोऽङ्कुशः ।
हिञ्जीरः[1] स्याल्लोहमयं[2] शृङ्खलं शृङ्खला त्रिषु ॥
निगालोऽस्त्री स्त्रियाम् मन्दूरन्दुकः पादबन्धनः[1] ।
कलापकः कर्णबन्धस्त्रिपदी पादबन्धनम् ॥
प्रवेणी तु परिस्तोमो वर्णः शारिः कुथो द्वयोः ।
वप्रक्रिया परिणतिः कल्पना सज्जना समे ॥
आधोरणो हस्तिपकहस्त्यारोहनिषादिनः ।
तत्प्रधाने महामात्रो हास्तिकं गजता गणः ॥
उद्धान्तो निर्मदो मत्तः प्रभिन्नो गर्जितो गजः ।
व्यालो दुष्टोऽथ गम्भीरवेदी शिक्षापराङ्मुखः ॥

---

1414. 1. C. स्थूलोच्चये for स्थूलोच्चयः. 1415. 1. C. मध्ये for मध्यं. 1418. 1. BD. पालकः for पाकलः. 1420. 1. 1. कन्दली for कदली. 1423. 1. BD. हिण्डीरः for हिञ्जीरः; 2. A. °मयः for मयं. 1424. 1. B. बन्धनम्. for बन्धनः.

यूथपो यूथनाथः स्यादीषादन्तो महारदः ।
मदोत्कटो मदकलः स्याद् बालः पञ्चहायनः ॥
दशवर्षस्तु पोतः स्याद्विको विंशतिवर्षकः ।
त्रिंशद्वर्षस्तु कलभः शुण्डारः[1] षष्टिहायनः ॥
गण्डूषिको बहिष्कर्षः[1] सुभागश्चातिहस्तिकः ।
पृथु[1]हस्तः स्थूलहस्तः [2]फलिहस्तः समास्त्रयः ॥
तुरगतुरङ्गतुरङ्गमसैन्धवसप्त्यश्ववाजिवाहहयाः ।
गन्धर्ववीतिघोटकहर्यर्वश्रीजहेषिणश्च समाः ॥
भेदाः खेङ्गाणतुकूखा[1]रखत्तुलाणकतेजिकाः ।
घोट्टाणा[1] अपि काम्बोजाः[2] पारसीका वनायुजाः ॥
आरट्टजाश्च बाह्लीकाः सिन्धुजाः शम्ब[1]लोद्भवाः ।
अम्बष्ठजा अन्वजवा गान्धारास्तैतिलेयकाः ॥
काश्मीराः[1] क्षुद्रकैरातास्त्रैगर्ता आश्विनेयकाः ।
सावित्रेयाः साल्वभवाः पारदा ह्रस्वकुकुराः[1] ॥
कुकुराः[1] शूरसेनीयाः कैकेया[2] उपमोचकाः ।
शाका[1] उत्तरमाद्रेया आवर्तप्रभवा हयाः ॥

1435. 1. B. शुण्डालः for शुण्डारः. 1436. 1. A. बहुष्कर्षः सुभोगः for बहिष्कर्षः सुभागः. 1437. 1. A. वधु for पृथु; 2. A. फली, C. फल for फलि. 1440. 1. A. तुह्वार, B. तुकूत्वार, D. तुकार for तुकूखार. 1441. 1. A. घोट्टीणा for घोट्टाणा; 2. C. काम्भोजाः for काम्बोजाः. 1442. 1. C. शम्भल° for शम्बल°. 1444. 1. C. गान्धाराः for काश्मीराः. 1445. 1. A. कुक्कुटाः, D. कक्कुसाः for कुक्कुराः. 1446. 1. A. कुक्कुटाः, B. ककुसाः, D. कक्कुसाः for कुक्कुराः; 2. B. केकेयाः, D. केकयाः for कैकेयाः. 1447. 1. BCD. शाकाः for शाकाः.

पारसीकादिसंज्ञाः स्युः पारसीकादिदेशजाः ।
श्रीवृक्षकी वक्षसि च रोमावर्तो मुखेऽपि च ॥
मल्लिकाक्षः सितेनाक्ष्णा कृष्णेनेन्द्रायुधाह्वयः ।
पञ्चभद्रस्तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः ॥
खुरोरःपुच्छकेशास्यैर्वलचैरष्टमङ्गलः ।
सुग्रीवाख्यः स यद्ग्रीवा[1] शक्रकार्मुकसंनिभा[2] ॥
धवलौ[1] कर्ककौकाहौ[2] पोङ्गाहः[3] शुक्लपिङ्गलः ।
कृष्णवर्णस्तु खुङ्गाहः[1] शोणः कोकनदच्छविः ॥
कुलाहस्तु[1] मनाक् पीतः कृष्णः स्याद्यदि जानुनि ।
कल्लोहः कपिलच्छायः पाण्डुवालधिकेसरः ॥
कयाहो लोहितः [1]पीतरक्तस्तु द्रवलाहकः[2] ॥
मनाक् पाण्डुरुराहः[1] स्यात् कृष्णजङ्घायुगं यदि ॥
पीयूषवर्णः सेराहः[1] पङ्गुलः[2] सितकाचरुक् ।
सर्व [1]एवान्यसंज्ञाः स्युरश्वा वर्णादिभेदतः ॥
आश्वमश्वीयमश्वानां वृन्दे स्युर्दोषिणः[1] परे ।
कृत्तिकापिञ्जरः स स्याद्यः पृषत्पुञ्जपिञ्जरः ॥

---

1453. 1. A. यद्ग्रीवाः for यद्ग्रीवा; 2. A. संनिभाः for संनिभा. 1454. 1. AC धवले for धवलौ; 2. BD. कर्कटौकाहौ, C कर्कटेकाहो for कर्ककौकाहौ; 3. C. पाङ्गाहः D. प्रोङ्गहः for पोङ्गाहः. 1455. 1. A. शुङ्गाहः, B. पिङ्गाहः, D. कुङ्गाहः for खुङ्गाहः. 1456. 1. AB. कलाहः for कुलाहः. 1458. 1. CD. पीतः for पीत; 2. BD. द्रवहालकः, A. ध्रु(द्र)वलाहः for द्रवलाहकः. 1459. 1. BD. उहाभः for उराहः. 1460. BD. सोराहः, C. सेराभः for सेराहः; 2. BD. पिङ्गलः for पङ्गुलः. 1461. 1. A. एवास्य for एवान्य. 1462. 1. BD. द्वेषिणः for दोषिणः.

इन्द्रवृष्टि'स्तु निर्मुष्को यमो हीनाधिकाङ्गकः ।
कराली तु जरद्दन्तस्त्रि'खुरस्तु खुरत्रिकः ॥
ककुदी ककुदावर्तो मुसल्यो वेल्लिताङ्घ्रिकः ।
भृङ्गी भृङ्गपदे 'मांसबुद्बुदग्रन्थिसंयुतः ॥
सूकलो 'दुर्विनीतोऽश्वः स्यात्तु बालः किशोरकः ॥
बडवाश्वावर्ती वामी बाडवं बडवागणे ।
कश्य'मश्वस्य मध्यं स्याद्भाण्डमायान'मित्युभे ॥
अलंकारे' निगालस्तु गलोद्देशः शफं खुरः ।
घोणा तु प्रोथमस्त्री स्याद्दन्तवेष्टस्तु नालिका ॥
कालिका दन्तरेखायां दन्तच्छिद्रमुलूखलम् ।
विदुर्ना कर्णमूले स्यात् खुरस्योपरि कुष्ठिका ॥
दन्तालिका कुशा वल्गा ग्रीवाभूषा तु गण्डकम् ।
चर्म'दण्डः कशा वक्त्रपट्टके तलसारकम्' ॥
तालिकाथ प्रचरणं प्रखुरोऽथ प्ररोहकः ।
भुक्काणो'ऽशनभस्त्रायां नासारज्जुस्तु लालिका ॥
त्रिष्वाश्वीनं तदश्वेन यदेकाहेन गम्यते ।
दामाञ्चनं पादपाशस्तैल'यन्त्रं तु नालिका ॥

---

1464. 1. C. इन्द्रवृष्णिः for इन्द्रवृष्टिः. 1465. C. त्रिखरी तु खर° for त्रिखरी तु खुर°. 1467. 1 BD. मांसो for मांस°. 1468. 1. C. दुर्विनीताश्वः for दुर्विनीतोऽश्वः. 1470. 1. B. om. 1. 1470; 2. D. असानम् with supra line आयानम, B. आसनम्, C. आध्यानम् for आयानम्. 1471. BD. अलंकारः for अलंकारे. 1476. 1. BD. दन्तः for दण्डः; 2. BD. सारकः for सारकम्. 1478. 1. C. बुक्काणः for भुक्काणः. 1480. 1. BD. त्वेक for तैल.

गतिभेदे स्त्रियामूर्मिः क्लीबे त्वर्द्धपुलायितम् ।
आस्कन्दितधौरितरेचितकप्लुतवल्गितभेदभृतो गतयः ।
धारास्तुरगस्य तुरस्तु गतिः पुरुषस्थितेरुन्नमिताग्रा ॥
यन्त्रं सैन्धवदानाय कृतं लवणमालिका ।
1485 स्याद्देवमणिरश्वस्य रोमावर्तो निगालजः ॥
कण्ठजो रोचमानः स्यात् स्वामिसौभाग्यवर्धनः ।
पर्याणं स्यात् पल्ययनं लाङ्गूलं पुच्छमस्त्रियाम् ॥
उभौ तु लोमलाङ्गूले वालहस्तश्च वालधिः ।
वङ्कः पर्याणभृङ्गे[1] स्यात् पश्चाङ्गी कविका कवी ॥
1490 खलीनोऽस्त्री समानौ तु वे[1]सराश्वतरौ समौ ।
वडवायां समुत्पन्नौ[1] मूकः कुण्डश्च वेसरात् ॥
महा[1]ङ्गमयदाशेररवणोष्ट्रक्रमेलकाः ।
टङ्कणः पादबन्धैस्तु दासेः करभः शिशुः ॥
स्याच्छृङ्खलक उष्ट्राणामौष्ट्रकं स्यात् कदम्बके ।
1495 बालेयकस्तु चक्रीवान् गर्दभो रासभः खरः ॥
शुनकः सारमेयः श्वा कौलेयो रतिकीलकः ।
कुक्कुरो मण्डली योगादलर्कः सरमा शुनी ॥
शुनकी विश्वकद्रुस्तु शुनको मृगयापटुः[1] ।
अर्जुन्यघ्न्या रोहिणी सौरभेयी
माहेय्युस्रा शृङ्गिणी गौश्च माता ।

---

1489. 1. BD. शृङ्गः for शृङ्गे. 1490. 1. BD. वेतरा° for वेसरा°. 1491. 1. B. कलाटङ्कः समुत्पन्नः for 1491a. 1492. 1. B. महागमभयादेशे, D. महागमयदाशेर for 1492a. 1498. 1. D. परः for पटुः.

गव्या गोत्रा गोगणे वत्सधेन्वो-
1500 र्वृन्दे स्यातां वात्सकं धैनुकं[1] द्वे ॥
प्रत्यब्दसूतिस्तु समांसमीना
परेष्टुका स्यात् प्रचुरप्रसूतिः ।
काल्योपसर्या प्रजनेऽवतोका
प्रस्कन्दिगर्भाथ वशा तु वन्ध्या ॥
संधिनी वृषभाक्रान्ता वेहद्गर्भोपघातिनी ।
नवप्रसूतिर्धेनुः स्याद्धेनुष्या [1]बन्धके स्थिता ॥
1505 सुव्रता[1] सुखदोह्या स्यात् प्रष्ठौही बालगर्भिणी ।
चिरसूता वष्कयणी जरती गौर्जरद्गवी ॥
नीली पिशङ्गी कल्माषी शोणी चेत्येवमादयः ।
वर्णभेदेन संज्ञाः स्युरुत्तमा गोषु नैचिकी ॥
संख्यादिहायनान्ता गौरेकाब्दा त्वेकहायनी ।
1510 एवं द्विहायनीत्यादि षड्दा [1]षोडती समे ॥
वञ्जुला तु बहुक्षीरा कपिला त्वग्निसंभवा ।
भूमिजा बहुला कृष्णा शबली व्योमसंभवा ॥
सुमनाः प्रच्च[1]राङ्गी च रक्तवर्णा तु वायुजा ।
सिता तु धवला पुण्ड्रा सुनन्दा जलसंभवा ॥
1515 द्रोणक्षीरा द्रोणदुघा गृष्टिः प्रथमसूतिका ।
गौरचण्डी तु सुकरा स्यादेवापीनमूधसि ॥

---

1500 1. BC. धेनुकं for धैनुकं. 1504. 1. AC. बन्धने for बन्धके. 1505. 1. BCD. सुप्रदा for सुव्रता. 1510 1. C. षोडशी for षोडती. 1513. 1. BD. प्रच्चराजी for प्रच्चराङ्गी.

ऋषभस्तु बलीवर्दः पुंगवो वृषभो वृषः ।
उक्षा भद्रः ककुद्मान् गौः सौरभेयश्च शाक्वरः ॥
अनड्वान् भग्नशृङ्गे तु तस्मिन् कूटश्च तूबरः ।
शोणो[1] नीलवृषः श्वेतपुच्छशृङ्गः खुराण्डकः[2] ॥
जरद्गवस्तु वृद्धोक्षो महोक्षस्तु महावृषः ।
लूनकर्णस्त्वकर्णः [1]स्याद्वण्डस्तु छिन्नपुच्छकः ॥
आर्षभ्यः षण्डतायोग्यः षण्डो गोपतिरिट्चरः ।
स्कान्धिकः[1] स्कन्ध[2]वाहः स्यात् समौ नस्योतनस्तितौ ॥
नस्या स्त्री नासिकारज्जुः पशुरज्जुस्तु दामनी ।
निधानं[1] स्याद्गवां दोहे पश्चाच्चरणबन्धनम् ॥
स्कन्धप्रदेशस्तु वहः सास्ना स्याद्गलकम्बलः ।
स्याद्धेन्वनडुहं धेनुरनड्वांश्च धुरंधरः ॥
धुरीणो धूर्वहो धुर्यो यस्तु सर्वधुरावहः ।
असौ सर्वधुरीणः स्याद् युग्यस्तु युगवोढरि ॥
युगाद्युगस्तु प्रासङ्गः प्रासङ्ग्यस्तस्य वोढरि ।
एकस्यास्तु धुरो वोढा योऽसावेकधुरीणकः ॥
पृष्ठ्यस्तु पृष्ठवाहः स्यात् प्रष्ठ[1]वाड्युगपार्श्वगः[2] ।
औक्षकं संघ उक्षणां स्याद्रोशकृद्रोमयोऽस्त्रियाम् ॥

---

1520. 1. BD. शोणानिल for शोणो नील; 2. A. खुरान्धकः for खुराण्डकः. 1522. 1. A. स्यात्पुण्ढः, C. स्यात्पण्डः for स्याद्वण्डः. 1524. 1. C. हालिकः for स्कान्धिकः; D. स्कान्धिकस्कन्धवाहौ for स्कान्धिकः स्कन्धवाहः; 2. B. वारः for वाहः. 1526. 1. A. समानं, C. नियानं for निधानं. 1533. 1. CD. पृष्ठ for प्रष्ठ; 2. पार्ष्णिगः, D. पार्ष्णिकः for पार्श्वगः.

गोग्रन्थिर्गोमये शुष्के करीषोऽस्त्री च दोहलम् ।
गोकुलं गोधनं जीवधनं चापि गवां व्रजे ॥
गोमान् गोमी गवां स्वामी गोविन्दोऽधिकृतो गवाम् ।
गोसंख्यो वल्लवो गोपगोपालाभीरगोदुहः ॥
दुग्धं तु क्षीरमूधस्यं पयः स्तन्यं नवं तु तत् ।
पीयूषोऽथ हविः सर्पिर्घृतमाज्यं समार्थकम् ।
क्लीबे तु नवनीतं स्याद् यद् दध्नोऽभिनवोद्धृतम् ।
तत्तु हैयंगवीनं यद्ध्यो[1]गोदोहोद्भवं घृतम् ॥
मण्डं दधिभवं मस्तु करम्भा दधिसक्तवः ।
आज्यं दशाब्दिकं कौहं[1] हृद्यं तु श्रीघनं[2] दधि ॥
स्थूलमङ्ग[1]लमप्यत्र बालं तु दधि बालकम् ।
दधि स्यादघनं द्रप्स्यं गन्धाढ्यं तु वलीमूखम् ॥
छिन्नं दधि विसं रूक्षं खलं च दधि निद्रवम् ।
बहुसूदनमप्यस्मिन् स्यात् कीलाटस्तु कूर्चिका ॥
विकृतौ पयसः क्षीरच्छदः संतानिका[1] स्त्रियाम् ।
विवधो वीवधो हारः पर्याहारो विहङ्गिका[1] ॥
मन्थास्तु मन्थमन्थानवैशाखा मन्थदण्डके ।
मन्थनी म(ग?)र्गरी मन्थविष्कम्भे कुठरः[1] पुमान् ॥

---

1542. 1. A. om II. 1542b—1546a. 1544. 1. C. कौभं for कौहं; 2. B. श्रीधनं for श्रीघनं. 1545. 1. C. मङ्गल्या for मङ्गलम्. 1549. 1. BD. सन्दायिका for संतानिका. 1550. 1. D. विहारिका for विहङ्गिका. 1552. 1. A. कुदरः, D कूठरः for कुठरः.

बोलो दण्डाहतं कालशेयारिष्टे च गोरसे ।
मथितमुदश्वित्तक्रं निर्जलमर्धाम्बु पादाम्बु ॥
स्यादाशितंगवीनं तत् त्रिषु यत्राशिताः पुरा ।
अजो बस्तः स्तबश्छागश्छगश्छगलकोऽपि सः ॥
ऊर्णायुरुरणकैलकमे[1]ढ्रोरभ्राविवृष्णिमेषाश्च ।
अविसोढमविमरीसं स्यादविदूसं च यद्दुग्धमवेः ॥
औरभ्रकमुरभ्राणामजानामाजकं गणः[1] ।
मार्जारो जाहको मर्को बिडालो वृषदंशकः ॥
मण्डल्याखुभुगोतुश्च दीनानाथस्तु मूषिकः ।
इन्दुरुश्च[1] वृषश्चाखुर्गिरिका बालमूषिका ॥
चुचुन्दरी[1] गन्धमूषी दीर्घदेही तु मूषिका[2] ।
त्रयो गौधेरगौधारगौधेया गोधिकासुते ॥
स चिक्रोडो यस्य पृष्ठे पाण्डुवर्णास्त्रिराजयः ।
कृकलासस्तु सरटः प्रतिसूर्योऽथ वृश्चिकः ॥
अली[1] द्रोणः शूककीटस्तच्छूकेऽखं(लं?) दुणं(लं?) द्वयम् ।
गृहगौली[1] तु मुसली द्वौ नीलङ्कुकमी समौ ॥
स्त्रियां शतपदी कर्णजलौकाः कुण्डलिन्यपि ।
लूतामर्कटकस्तन्तुवायः[1] स्यादूर्णनाभकः[2] ॥

---

1557. 1. A. मण्ड्रो° for मेढ्रो°. 1559. 1. BD. गणे for गणः. 1562. 1. AC. उन्दुरः for इन्दुरुः. 1563. 1. B. शुच्छन्दरुः for चुचुन्दरी; 2. AB. om. l. 1563. 1567. 1. A. आलिः for अली. 1568. 1. A. गोली for गौली. 1570. BD. वाये for वायः; 2. C. नाभिकः for नाभकः.

उद्दंशो मत्कुणस्तुल्यौ श्रेणिका तु पिपीलिका ।

इति *वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
चतुष्पदाध्यायस्त्रयोदशः ॥



# १४

## शकुन्ताध्यायः

विहगविहंगमद्विजविविष्किरपक्षिपतद्-
विकिरपतत्रिपत्रिपतगाण्डजपत्ररथाः ।
शकुनगरुत्मदंशुनभसंगमनीडभवाः
शकुनिशकुन्तिवाजितरुधामशकुन्तखगाः ॥
पतत्रयः पतंगाश्च पित्सन्तश्च विहायसः ।
शुक्ला[1]पाङ्गः शिखी केकी नीलकण्ठः शिखावलः ॥
शिखण्डी बर्हिणो बर्ही मयूरो भुजगाशनः ।
मेघनादानुलासी द्वौ[1] समौ चन्द्रकमेचकौ ॥
पिच्छबर्हे कलापश्च प्रचलाकः शिखण्डकः[1] ।
शिखाचूडे[1] समे स्यातां समौ भासशकुन्तकौ ॥
ध्वाङ्क्षो नालीजङ्घो नाडीजङ्घः सकृत्प्रजः परभृत्[1] ।
काकः करटोऽरिष्टो बलिपुष्टो वायसो बलिभुक् ॥

---

* BD. om. वत्सकुलवामनभट्टबाणविरचिते. 1575. 1. BD. शुक्रा° for शुक्ला°. 1577. 1. BD. द्वे पिच्छबर्हे नपुंसके for द्वौ समौ चन्द्रकमेचकौ ।. 1578. 1. BD. read l. 1578 as: प्रचलाकः कलापश्च समौ चन्द्रकमेचकौ ।. 1579. 1. BD. चूडा for चूडे. 1580. 1. CB. परभृतः for परभृत्.

आत्मघोषो महानेमिरन्यवापश्च मौकुलिः[1] ।
मद्गुस्तु द्रोणकाकः स्यात् काकोलो जलवायसः ॥
कौशिको वायसारातिदिवान्धोलूकपेचकाः ।
कृष्णे तु कौशिके स्यातां कृतमालकनक्तकौ ॥
खञ्जनः खञ्जरीटः स्यात् तस्य गोलत्तिका[1] प्रिया ।
कोयष्टिकस्तु शिखरी [1]कटुक्वाणस्तु तित्तिरिः ॥
भृङ्गः कलिङ्गो धूम्याटः समौ सारङ्गचातकौ ।
करेटुः कर्करेटुः स्यात् क्रकणक्रकरौ समौ ॥
व्याघ्राटस्तु भरद्वाजः श्येनः चिम्रः सुपर्णकः ॥
श्येनी तु प्राचिका दार्वाघाटस्तु शतपत्रकः ।
जीवंजीवो जीवजीवः श्येनः पत्री शशादनः ।
जलरङ्कुस्तु नत्यूहो दात्यूहः कलकण्ठकः ॥
पारावतः कलरवः कपोतो बालवत्सकः ।
मणिकण्ठः पूर्णकूटश्चाषो राजविहंगमः ।
किकीदिविः स्वर्णचूडश्चित्रवाजो विशोककः ।
कोकिलस्तु कुहूकण्ठः[1] कालकण्ठो वनप्रियः ॥
पिकः परभृतश्चाथ [1]कपिञ्जलशरू समौ ।
कृकवाकौ ताम्रचूडचरणायुधकुक्कुटाः ॥
चूलिकारणदीर्घाङ्घ्रिमयूरवटका अपि ।
दीर्घग्रीवः सितवपुर्मृदुप्रोथः स्खलन्मनाः ॥

---

1582. I. ABC. मौकलिः for मौकुलिः. 1586. I. BD. गोलक्तिका for गोलत्तिका. 1587. I. BD. कर for कटु. 1597. I. BD. कर्णः for कण्ठः. 1598. I. BD. कपिञ्जर for कपिञ्जल.

बलाकाजातिरेषः[1] स्यात् तदन्यो[2] नालिकेरजः ।
गृध्रे तु पुरुषव्याघ्रो दाक्षाय्यश्च[1] सुदर्शनः ॥
तद्भेदाः कर्कटस्कन्धः पर्कटः कमलच्छदः ।
दीर्घपाल्लोहपृष्ठश्च कङ्को भेरुण्ड इत्यपि ॥
चटकः कलविङ्कः स्यात् से[1]व्यस्तिलककण्टकः ।
आटको बलिभुक् तस्य चटका वल्लभा तयोः ॥
स्त्र्यपत्ये चटका चाट[1]कैरस्तु पुमपत्यके ।
आतापी चिल्ल उत्पादशयनोऽण्डुकटिट्टिभौ ॥
शुकः कीरश्च कोरः [1]स्यादुत्पिबश्चन्द्रिकाप्रियः ।
वाचाला शारिका गर्तकुक्कुटो वृत्तलोचनः ॥
कुलालकुक्कुटश्चाथ पुष्कराह्वस्तु सारसः ।
हंसो मरालश्चक्राङ्गो जालपादः सितच्छदः ॥
नीलाक्षो मानसौकाश्च हंससाचिस्तु सोऽल्पकः ।
आताम्रैर्मलिनैः कृष्णैश्चरणैश्चञ्चुभिः सिताः ॥
राजहंसा मल्लिकाक्षा धार्तराष्ट्रा यथाक्रमम् ।
कलहंसस्तु कादम्बः किञ्चिदाधूसरच्छदः ॥
कारण्डवो बृहत्पक्षः क्रयिस्तु कुल[1]पायिकः ।
बको बकोटः कह्वश्च दर्वीतुण्डस्तु तद्भिदा ॥

---

1602 1. BD. एषा for एषः; 2. तदन्ये नालि केरजाः for 1602b. 9603. 1. A. दाक्षार्यः for दाक्षाय्यः. 1606. 1. BD. वेप्यः for सेव्यः. 1608. 1. ABD. चाटकेरः for चाटकैरः. 1610. 1. A. स्याबुत्सिबः, C. स्यादुद्बिम्बः for स्यादुत्पिबः. 1618. 1. C. पायिका for पायिकः. 1619. BD. दर्वीहंसः for दर्वीतुण्डः.

वरटा वरला हंसी सारसीलक्ष्मणे समे ।
चक्रवाकरथाङ्गाह्वकोकचक्राः [1]समा इमे ॥
शरारिराटिराडिश्च[1] बलाका बिसकण्ठिका ।
क्रुङ्क्रौञ्चौ कुररोत्क्रोशौ समौ प्लवपरिप्लवौ[1] ॥
कुक्कुरः कर्करः केकी कृकवाकुः कपिञ्जलः ।
वर्तिका वर्तको बालो गोनर्दो गिरिनर्तिका ॥
चकोरो वरकः शारी पद्यो वार्तीकतित्तिरी ।
रक्तवर्त्मक[1] इन्द्राह्वो[2] वराटश्चेति विष्किराः ॥
हारीतः कोकिलो [1]लट्वा कपोतशुकशारिकाः ।
जीवंजीवकदात्यूहौ चटको भृङ्ग इत्यमी ॥
प्रतुदा[1] अथ कादम्बहंसकारण्डवप्लवाः ।
बलाका सारसोत्क्रोशकोकक्रौञ्चादयोऽप्सराः ।
मन्था[1]वलो मुखापानो जतुकाजिनपत्रिका ।
लोपालोपालिका[1] तुल्ये शित्पुटस्तु मधुव्रतः ॥
इन्दिन्दिरभ्रमरषट्पदचञ्चरीक–
रोलम्बभृङ्गमधुलिण्मधुपद्विरेफाः ।
पुष्पंधयो मधुकरोऽलिरली च तत्र
स्यात् पुष्पलिट् च भसलश्च शिलीमुखश्च ॥

1621 1. BD. इमे समे for समा इमे. 1622. 1. A. आर्यरातिश्च, C. आटिरात्तिश्च D. आतिरारिश्च for आटिराडिश्च. 1623. 1. A. om. ll. 1623—1626. 1627. 1. A. कुरुकुन्तकः for रक्तवर्त्मकः; 2. BD. इन्द्रासः for इन्द्राह्वः. 1628. 1. BD. रट्वा for लट्वा. 1630. 1. A. प्रातुदा for प्रतुदा. 1632. 1. BD. मन्थावलमुखापानौ for 1632a. 1633. 1. A. °लिके for °लिका.

गन्धोलिका[1] तु वरटा गृहिणी गृह[2]कारिका ।
ज्योतिरिङ्गणखद्योतज्योतिष्कीटास्तमोमणिः ॥
झीरुका झिल्लिका चीरी भृङ्गारी मधुगायनी ।
मक्षिका भम्भराली स्या[1]च्चर्वणा नीलमक्षिका ॥
पतंगः शलभः क्षुद्रा सरघा मधुमक्षिका ।
हालाहलस्त्वञ्जलिका पुत्तिका तु पतंगिका ॥
अरण्यमक्षिका दंशः पूत्यण्डाः क्षुद्रपक्षिणः ।
मक्षिकाजातिरल्पा स्याद्दंश्यथ ग्राम[1]मक्षिका ॥
घोण्टाथ मशकास्तेनाः परोष्णी तैलपायिका ।
गृहेष्ववस्थिताः पक्षिमृगाश्छेकाश्च गृह्यकाः ॥
अर्भकः पृथुको डिम्भः पाकः पोतः शिशुश्च सः ।
पक्षिपोतस्तु पिल्लाकश्चञ्चुस्त्रोटिः सृपाटिका ॥
पत्त्रच्छदो गरुत्पत्त्रं पतत्रं पक्षतिः स्त्रियाम् ।
पक्षमूले कुलायस्तु नीडोऽस्त्री डयनं गतिः ॥
प्रडीनोड्डीनसंडीनान्येताः पक्षिगतिक्रियाः ।
अण्डं कोशः स्त्रियां पेशी मिथुनं द्वन्द्वमित्युभे ॥
स्त्रीपुंसौ युगली युग्मं युगलं युगमित्यपे ।
संघातसंघसमुदयसमवायस्तोमनिवहसमुदायाः ॥
निकरव्यूहसमूहव्रातनि[1]कायौघविसरसंदोहाः ।
झाटचयवारसंचयनिचयगणप्रकरपेटकप्रचयाः ॥

1636. 1. गन्धालिका, C गन्डोलिका for गन्धोलिका; 2. A. प्रहरोधिका, C. गृहगोलिका for गृहकारिका. 1539. 1. A. वर्णना for चर्वणा.

व्रजपुञ्जौ निकुरुम्बं जालं पटलं कदम्बकं चक्रम् ॥
वितानं मण्डलं चक्रवालं च वलयं कुलम् ।
अनीकमस्त्री पटली मण्डली संहतिस्ततिः ॥
सधर्मिणां समाजः स्यात् पशूनां समजो गणः ।
तिरश्चां तु कुलं यूथमस्त्रियामथ जन्तुभिः ॥
सजातीयैः सार्थवर्गौ कूटोऽस्त्री राशिरुत्करः ।

इति *वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
शाकुन्ताध्यायश्चतुर्दशः ॥

—— :❀: ——

# १५

## पुराध्यायः

पुरपुटभेदनपट्टणनगराणि स्त्री तु पूः पुरी नगरी ।
अन्यानि मूलनगराच्छाखानगराणि बाह्यनगराणि ॥
प्राकारवरणसाला वप्रोऽस्त्री तस्य शिखरकूटानि ।
क्षुद्राणि कपिशिरांसि [1]प्राचीरं प्रान्त[2]तोवृतिर्वाटः ॥
प्राकारः परितः खाते परिखा परिखातनम् ।
अयोध्योज्जयिनी माया मिथिला मृत्तिकावती ॥
कौशाम्बी मधुरा राढा[1] काञ्ची माहिष्मती जया ।
द्वारका विदिशा चम्पा स्त्रुघ्नं पाटलिपुत्रकम् ॥

---

* BD. om. वत्सकुलवामनभट्टबाणविरचिते. 1665. 1. CD. प्राचीनं for प्राचीरं; 2. ABD. प्रान्तवृतिः for प्रान्ततोवृतिः. 1668. 1. AD. राडा for राढा.

प्रतिष्ठानं पुष्पपुरमित्याद्या बहवः पुरः ।
पुष्करं रुद्रकोट्याख्यं केदारं पुरुषोत्तमम् ॥
कोकामुखं[1] कुरुक्षेत्रं रङ्गमाम्रातकेश्वरम् ।
कुब्जाम्रं[1] नैमिशं पञ्चनदं बदरिकाश्रमम् ॥
रामेश्वरं महाकालं गोकर्णं विजयेश्वरम् ।
श्रीशैलं शम्बलं काञ्चीं पद्मनाभं प्रभासकम् ॥
सालग्रामं गयां काशीं प्रयागं वामनाश्रमम् ।
पुण्यार[1]ण्यं कनखलं द्वारकां च महालयम् ॥
प्राहुर्विमुक्तिस्थानानि[1] कोणार्कप्रमुखान्यपि ।
निषद्या त्वापणः[1] पण्यवीथी तु विपणिः स्त्रियाम् ॥
हट्टस्तु पण्यभूमिः स्याज्जुटङ्को लवणापणः ।
प्रतोली विशिखा रथ्या बहिर्द्वास्तोरणोऽस्त्रियाम् ॥
पूर्द्वाःकूटं हस्तिनखः पुरद्वारं तु गोपुरम् ।
गृहमुदवसितं[1] निकेतमोकः शरणमगारनिशान्तधाम[2] वस्त्यम् ॥
सदनभवनवेश्मसद्मगेहावसथनिवेशनमन्दिरास्पदानि ।
केचिदावसथं पुंसि निकेतं च प्रचक्षते ॥
गृहाः पुंभूम्नि संस्त्यायो निकाय्यो निलयालयौ ।
क्षयो वासः कूटमस्त्री शालाथ मुनिवेश्मनि ॥

---

1672. 1. C. मुखाः for मुखं. 1673. 1. B. कुब्जाख्यं for कुब्जाम्रं. 1677. 1. C. ब्रह्मारण्यं for पुण्या°. 1678. 1. A. विमुक्तेः स्थानानि for विमुक्ति°. 1679. 1. BD. त्वापणिः for त्वापणः. 1683. 1. BD. नितान्त, AC. निशान्त for निकेत; 2. B. नितान्तधाम. C. निवसथा for निशान्तधाम.

उटजोऽस्त्री पर्णशाला चन्द्रशाला शिरोगृहम् ।
चतुःशालं संजवनं छात्रादिनलयो मठः ॥
विहारः सौगतावासश्चैत्यमायतनं समे ।
प्रपा पानीयशाला स्यात् सत्रशाला प्रतिश्रयः ॥
अपवरकं गर्भगृहं प्रासादो देवभूभुजां सदनम् ।
सौधोऽस्त्री राजगृहं धनिकगृहं पुंनपुंसकं हर्म्यम् ॥
वेश्याजनाश्रयो वेशो मण्डपोऽस्त्री जनाश्रयः ।
हस्तिनां चतुरं शाला वाजिशाला तु मन्दुरा ॥
अन्वासनं [1]कारुगृहमरिष्टं सूतिकागृहम् ।
संदाननी गवां शाला संधानी[1] कुप्यशालिका ॥
गञ्जा तु मदिराशाला चित्रशाला तु जालिनी ।
आवेशनं शिल्पशाला[1] पत्त्रिशाला तु नालिका ॥
संवासनं कर्मशाला पाकशाला महासनम् ।
क्लीबे तु कायमानं स्यादुपकार्योपकारिका ॥
आवालीर्भट्टिगेहाली निगमस्तु वणिक्पथः ।
द्वाः स्त्री द्वारं प्रतीहारः पक्षद्वारे[1] तु पक्षकः ॥
प्रच्छन्नमन्तर्द्वारं स्याद्भित्तिः कुड्यं नपुंसकम् ।
वेश्मस्थूणा गृहस्थूणं वेदिका तु वितर्दिका ॥
द्वारस्योपरि यद्दारु नासा यद्दार्वधः शिला ।
उत्तरङ्गस्तु यत्तिर्यग् दारु नासोपरि स्थितम् ॥

---

1696. 1. AB. करि for कारु. 1697. 1. C. संध्यानी for संधानी.
1699. 1. B. शिल्पि for शिल्प. 1703. 1. A. पक्षद्वारं for पक्षद्वारे.

तोरणस्योपरिस्थं यद्दाम वन्दनमालिका ।
स्यात् कवाटं त्रिष्वररं तद्विष्कम्भेऽर्गलार्गलम् ॥
सूचिरल्पार्गला तुल्ये द्वारयन्त्रं तु तालकम् ।
तदुद्घाटनयन्त्रं तु कुञ्चिका प्रतितालिका ॥
कुट्टिमोऽस्त्री निबद्धा भूरङ्गणं[1] चत्वराजिरे ।
वलभी छादनं वक्रदारु गोपानसी स्त्रियाम् ॥
कपोतपालिकायां स्याद्विटङ्कं पुंनपुंसके[1] ।
नीव्रं वलीकमस्यान्ते चोलो ना पटलं छदिः ॥
गृहावग्रहणी देहल्यथ द्वारप्रकोष्ठके ।
प्रघाणः प्रघणोऽलिन्दः पिण्डकश्च[1] चतुष्टये[2] ॥
बन्धालीर्मुण्डकं[1] तस्य पार्श्वयोश्छादनं[2] दली ।
शिलास्थूणादिषूत्कीर्णा वनिता सालभञ्जिका ॥
वंशो गृहोर्ध्वके[1] काष्ठे स्त्रीगृहं तु महीभृताम् ।
अन्तःपुरं तु शुद्धान्तावरोधाववरोधनम् ॥
स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च ।
विच्छन्दकविभेदाः[1] स्युर्मेदिनीपतिवेश्मनाम् ॥
द्वयोः प्रणाली हर्म्यादिजलनिर्गमपद्धतिः ।
आरोहणं तु सोपानं निश्रेणिरधिरोहिणी[1] ॥

---

1712. 1. A. अङ्कणं for अङ्गणं. 1714. 1 C. पुंनुपसकम् for पुंनपुंसके. 1717. 1. BD. पिण्डकं for पिण्डकः; 2 A. चतुष्टयम् for चतुष्टये. 1718. 1 AC. बन्धाली मुण्डकं for बन्धालिर्मुण्डकं; 2. BD छादनदली for छादनं दली. 1720. 1. A. गृहोद्वटे, D. गृहोर्ध्वगे for गृहोर्ध्वके. 1723. 1. BD. प्रभेदाः for विभेदाः. 1725. 1. AB. निःश्रेणिः for निश्रेणिः.

स्थूणा तु भवनस्तम्भे स्वल्पस्थूणा तु पाटिका ।
मेध्री[1] स्यात् पाटिकामूर्ध्नि स्थूणाशीर्षे[2] शिली शिला ॥
कला कपोतायनिका संधिः पटलकुड्ययोः ।
वातायनं गवाक्षं स्याज्जालकं पीठमासनम् ॥
अपटीका काण्डपटी प्रतिसीरा यवनिका तिरस्करिणी ।
शय्या शयनं तल्पं शयनीयं तलिममास्तरणम् ॥
खट्वा तु मञ्चपर्यङ्कपल्यङ्काः पुंसि च स्त्रियाम् ।
उपधानं तूपबर्हः[1] पतद्ग्राहः प्रतिग्रहः[2] ॥
समुद्रकः संपुटक उल्लोचोऽस्त्री वितानकम् ।
वस्त्रवेश्म स्थुलं दूष्यं गृहचन्द्रस्तु दर्पणः ॥
आदर्शो मुकुरो दीपप्रदीपौ तु प्रदीपिका ।
संमार्जनी शोधनी स्यात् संकरावकरौ समौ ॥
प्रसाधनी कङ्कतिका पिष्टातः पटवासकः ।
परिवारः परिकरः परिबर्हः परिच्छदः ॥
आर्द्री जलार्द्री व्यजने वास्त्रे[1] जलसमुच्छिते[2] ।
व्यजनं तालवृन्तं स्यात् समौ गेण्डुककन्दुकौ ॥
कन्दुकास्फालने स्त्रीणां चागे यस्तटितामिव ।
सैव गोमूत्रिकाथ स्यात् सविलासः स मनोहरः ॥

---

1727. 1. A. मद्री, D. मेन्ध्री for मेध्री; 2. A. शीर्षं शिला शिली for शीर्षे शिली शिला. 1733. 1. BD. बर्हं for बर्हः; 2. A. समुद्रकौ for प्रतिग्रहः. 1740. 1. BCD. वस्त्रे for वास्त्रे; 2. C. समन्विते for समुच्छिते.

पञ्चावर्तप्रहारो[1] यः पञ्चबिन्दुर्मृगीदृशाम् ।
शतपदगमनं तु गीतमार्गः[1] सरसविलासमनोहरं युवत्याः ।
अविरलविरलः पदक्रमो यश्चतुरगमागमनेषु चूर्णपादः ॥
कोष्ठागारं[1] कुसूलं[2] स्याद्धस्तकोशो वाटकम्[3] ।
वस्त्रं निवसनमंशुकमम्बरमाच्छादनं वासः ।
वसनं चेलं सिचयः पुंसि [1]सुचेलो द्वयोस्तु पटशाटौ ।
परिधानान्तरीयोपसंव्योनान्यधराम्बरे ।
प्रावार उत्तरासंगस्तस्मिन् बृहतिका स्त्रियाम् ।
शय्यास्वङ्गप्रावरणं यदसावुत्तरच्छदः ।
संव्यानमुत्तरीयं स्याच्चोलः कूर्पासमस्त्रियाम् ।
तद्भेदे चोलकः पुंसि वराशिः स्थूलशाटकः[1] ।
निचोलः प्रच्छदपट उष्णीषं शीर्षवेष्टनम् ।
पटच्चरं जीर्णवस्त्रं पुंसि नक्तककर्पटौ ।
परिवीतं त्रिपूत्सृष्टं निवीतं प्रावृतं त्रिषु ।
नवाम्बरं निष्प्रवाणि तन्त्रकं च समं त्रयम् ।
गात्रिका तु स्त्रियां गात्रे गाढग्रन्थिमदंशुकम् ।
वस्त्रे[1] तु चीवरं चीरं चीरा[2] चीवरिका स्त्रियाम् ।
पत्त्रोर्णं धौतकौशेयं राङ्कवं मृगरोमजम् ।

---

1744. 1. BD. प्रहारोऽयं for प्रहारो यः. 1745. 1. AB. गीति for गीत. 1747. 1. BC. गोष्ठा° for कोष्ठा°; 2 C. कुसूलः for कुसूलं; 3. C. वराटकः for वराटकम्. 1749. 1. BD. सुचेलः for सुचेलः. 1754. 1. A. om. l. 1754. 1760. 1. B वस्त्रं for वस्त्रे; 2. C. चारी for चीरा.

नीशारः स्यात् प्रावरणं हिमवातनिवारणम् ।
स्याल्लाक्षिकं रौच[1]निकं शाकलं कार्दमं क्रमात् ।
त्रिषु लाक्षादिना रक्ते युगलं धौतवस्त्रयोः ।
यत्तदुद्गमनीयं स्याद्दशा स्त्री भूम्नि वर्तयः ।
अर्धोरुकं वरस्त्रीणां चण्डातकमथोच्चयः ।
नीवी च वसनग्रन्थौ वस्त्रान्ते [1]त्वञ्चलोऽस्त्रियाम् ।
वायस्तु तन्तुसंतानो वेमा ना वायदण्डकः ।
सूत्राणि तन्तवो द्वौ तु समौ रल्लककम्बलौ ।
कक्ष्या तु चल्लणं कच्छः कौपीनं मलमूलकम् ।
कञ्चुको वारवाणोऽस्त्री तद्भेदे कञ्चुली स्त्रियाम् ।
निर्णिक्तं शोधितं मृष्टं धौतं [1]वीध्रमपि त्रिषु ।
तत्तद्रक्ते तु काषायमञ्जिष्ठप्रमुखं त्रिषु ।
शुक्लशुचिशुभ्रधवलश्वेतवलक्षावदातसितहरिणाः ।
पाण्डरपाण्डुरविशदश्वेताऽर्जुनगौरपाण्डवश्च समाः ।
कालश्यामश्यामलकृष्णासितनीलमेचकास्तु समाः ।
रक्तो[1] रोहित[2]लोहितताम्रारुणशोणपाटलाश्च[3] समाः ।
पीतो हारिद्राभो गौरो हरितो हरिच्च पालाशाः ।
श्यावः कपिशो धूमलधूम्रौ कृष्णारुणोऽथ पिङ्गः स्यात् ।
कडारः कपिलः कद्रुः पिशङ्गः पिङ्गलश्च सः ।

---

1763. 1. A. राजनीकं for रौचनिकं. 1767. 1. C. त्वञ्चरो° for त्वञ्चलो°. 1772. 1. B. विन्ध्रं, D. वीन्ध्रं for वीध्रं. 1775. ABD. श्वेत for श्येत. 1777. 1. ABD. रक्ता for रक्तः; 2. BD. लोहित-रोहित for रोहितलोहित; 3. ABD. पाटलास्तु for पाटलाश्च.

चित्रकर्बुरकि'र्मीरकल्माषैताः सशारकाः ।
शब'लोऽथ गुणाः पुंसि गुणिनस्तद्वति त्रिषु ।
एतैनी सैव सारङ्गी कल्माषी कर्बुरा च सा ।
रोहिणी लोहिनी शोणी रोहिता लोहितारुणा ।
शोणा श्येनी सिता 'श्येता हरिता हरिणी तथा ।
प्रस्फोटनं शूर्पमस्त्री तितउः पुंसि 'चालनी ।
कटः किलिञ्जः कण्डोलः पिटः 'स्यूतः प्रसेवकः ।
अस्त्री तु मुसलोऽप्योग्रमु'दूखलमुलूखलम् ।
तुषस्तु त्वचि धान्यानामवघातस्तु खण्डनम् ।
फलीकृतास्तण्डुलाः स्युः शम्बूकास्तत्कणाः' स्त्रियः ।
तन्मलं पुंसि शम्बूको' ज्येष्ठाम्बु स्यात्तदम्बुनि ।
अवगाहो जलद्रोणिः कटाहः कर्परः समौ ।
स्थाल्युखा पिठरः कुण्डं मणिकं तु त्रिलिङ्गकम् ।
अलिञ्जरो द्वयोः कुम्भघटौ पुंसि निपः कुटः ।
कलशं त्रिषु वा क्लीबे करीरः कर्करी स्त्रियाम् ।
आलूर्गलन्तिका तुल्ये भृङ्गारः कनकालुका ।
पारी तु स्वल्पकलशी कलशे(शी?) कर्परः पुमान् ।

---

1781. I. CD. किम्मीर for किर्मीर. 1782. I. C. शम्बलो° for शबलो°. 1785. ABD. श्वेता for श्येता. 1786. I. CD. चालिनी for चालनी. 1787. I. A. स्योतः for स्यूतः 1788. I. BD. उलूखलमुदूखलम् for 1800b. 1790. I. C. तत्त्वणाः for तत्कणाः. 1791. I. A. खम्बूकः for शम्बूकः.

समौ करङ्ककरकौ विधानं स्यादुदश्वनम् ।
शालाजिरो वर्धमानः शरावं पुंनपुंसकम् ।
भद्रकुम्भः पूर्णकुम्भ उष्ट्रिका मदिरादिभृत् ।
कन्दुर्ना स्वेदनो भ्राष्ट्रोऽम्बरीषमथ कौशिका ।
मल्ली मल्लोऽथ मञ्जूषा पेटा[1] पिटकपेटकौ ।
स्नेहपात्रे कुतूः कुत्तेः सैवाल्पा कुतुपः पुमान् ।
हसन्त्यङ्गारशकटी हसन्यङ्गारधानिका ॥

इति *वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे पुराध्यायः पञ्चदशः॥

# १६

## उक्तिभेदाध्यायः

उक्तिस्तु[1] व्याहृतिर्वाक्यं भाषितं वचनं वचः ।
निगादनिगदालापव्याहाराश्चोत्तरे त्रिषु ॥
अभिहितभणितव्याहृतगदितेरितकथितजल्पितालपितम् ।
आख्यातरटितशंसितकीर्तितगीतोदितोक्तगीर्णानि ॥
श्लोकः कीर्तिः समज्ञा[1] च यशः श्लाघा तु कत्थनम् ।
स्तुतिः शंसा नुतिः स्तोत्रमीडनं स्तवनं स्तवः ॥

---

1802. 1. A. पेटिपीटक for पेटा पिटक. * BD. om. वत्सकुलवामनभट्टबाणविरचिते. 1805. 1. BD. उक्तिः स्याद् for उक्तिस्तु. 1809. 1. AC. समाख्या for समज्ञा.

स्यादाख्याह्वाभिधा संज्ञा नामधेयं च नाम च ।
हूतिराकरणाह्वाने संहूतिर्बहुभिः कृता ॥
शास्त्रे शब्दो वाचको वाचिकं स्यात्
संदेशार्थः सुप्तिङन्तं पदं स्यात् ।
आशीः स्त्री वाङ्मङ्गलार्थानुरागा-
ज्जातः शब्दः स्यात् प्रणादः परौ तु ॥
चटुश्चाटुश्च वा क्लीबे भर्त्सनं [1]त्वपवादगीः ।
स्यादामन्त्रणमाप्रश्न आहूतिस्तु निमन्त्रणम् ॥
प्रवृत्तिवार्ते वृत्तान्त उदान्तोऽथ जनश्रुतिः ।
किंवदन्त्यशरीरा तु वागेवाकाशभारती[1] ॥
कर्णाकर्णी तु वाक्कर्णपारंपर्यप्रवर्तनी ।
उपालम्भः सनिन्दोक्तिरर्थवादः प्रशंसनम् ॥
आक्षेपावर्णनिर्वादपरिवादापवादकाः ।
क्लीबे विगानकौलीने अभिशापोऽभिशंसनम्[1] ॥
शापोऽधिक्षेप[1] आक्रोश उपक्रोशो विगर्हणा ।
कुत्सा निन्दा जुगुप्सा च लोटना सानुसारवाक् ॥
रुशती वागशुभा स्यात् पृच्छा प्रश्नोऽनुयोगश्च[1] ।
प्रतिवचनमुत्तरं स्यादुच्चैर्घुष्टं तु घोषणाथ स्यात् ॥

1815. 1. D. चाप° for त्वप°. 1818. 1 C. om. ॥. 1818 & 1819. 1822. 1. C. °ऽपशंसनम् for °ऽभिशंसनम्. 1823. 1. BD. शापोऽथ क्रोशः for शापोऽधिक्षेपः. 1825. 1. C. प्राश्नानुयोगयोः for प्रश्नोऽनुयोगश्च.

मिथ्याभियोगोऽभि(भ्या?)ख्यानं प्रजल्पस्तु बहूदितम् ।
पुमानाह्वारणा यः स्यादाक्रोशो मैथुनं प्रति ॥
प्रस्तावोपक्रमोद्घातप्रारम्भप्रक्रमाः[1] समाः ।
उपोद्घात उदाहार आख्यानं पूर्वसंकथा ॥
इतिहासः पुरावृत्तं पुराणं पञ्चलक्षणम् ।
ब्रह्माण्ड[1]पाद्मवैष्णवभागवताग्नेयशैवलैङ्गानि ॥
ब्राह्मस्कान्दभविष्यद्वामनवाराहनारदीयानि ।
गारुडब्रह्मकैवर्तमार्कण्डेयानि मात्स्यकम् ॥
कौर्मं चाष्टादशैतानि तावन्त्यन्यानि संख्यया ।
सनत्कुमारताण्डवमानवमारीचवायवीयानि ॥
कालिककापिलभार्गववारुणदौर्वाससानि माहेशम् ।
कौमारनारसिंहब्रह्माण्डौशनससौरसाम्बानि ॥
पाराशरमथ वृत्तं मन्दाक्रान्तावसन्ततिलकादि ।
मन्वत्रिविष्णुहारीतसंवर्तयमगौतमाः ॥
पराशरव्यासशङ्खलिखितोशनसोऽङ्गिराः ।
कात्यायनो याज्ञवल्क्यः शातातपबृहस्पती ॥
आपस्तम्बो वसिष्ठश्च दक्षश्च स्मृतिकारकाः ।
समीक्ष्यं[1] सांख्यशास्त्रं स्याद्गान्धर्वं गीतिशासनम्[2] ॥
अन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः ।
शब्दविद्या व्याकरणं निघण्टुर्नामशासनम् ॥

---

1829. 1. C. क्रियाः for क्रमाः. 1832. BC. पद्म for पाद्म.
1844. 1. B. समीक्षं for समीक्ष्यं; 2. C. शास्त्रकम् for शासनम्.

काव्यं कृतिः प्रबन्धश्च तत्र श्लेषादयो गुणाः ।
अलंकाराः स्युरुत्प्रेक्षाश्लेषाक्षेपोपमादयः ॥
कथा नानाविधैर्गद्यैर्वस्तुवैचित्र्यकल्पना ।
आख्यायिकोपलब्धार्था सोच्छ्वासा दृढबन्धना ॥
द्वित्रिरुदीरितमाम्रेडितमथ शोकेन भीत्यादेः ।
काकुः स्त्री [1]ध्वनिविकृतिर्व्यवहारोऽच्चो[2] विवादश्च ॥
आभाषणं स्यादालापः संलापोऽन्योन्यभाषणम् ।
विप्रलापो विरोधोक्तिः सुप्रलापः सुभाषितम्[1] ॥
निह्नवस्त्वपलापः स्यादनुलापो मुहुर्वचः ।
हाहतोऽस्मीति वचनं विलापः परिदेवनम्[1] ॥
वल्गावचनमुल्लापः [1]काका वचनमव्ययम् ।
प्रलापोऽनर्थकं वाक्यमनुवादोऽनुभाषणम् ॥
संवादस्त्वानुकूल्यार्थे विसंवादी विपर्यये ।
उत्प्राशः स्यादुपालम्भो लल्लरो जिह्वया हते ॥
वाक्ये तु गलमूलस्थे [1]कल्लिर्ना जिह्वया हते ।
तुम्बको गद्गदोऽस्पष्टं[1] सान्त्वं तु मधुरं वचः ॥
स्फुटं स्पष्टमथास्पष्टं म्लिष्टं[1] पथ्यं हितार्थकम् ।
अम्बूकृतं सनिष्ठीवं निर्दोषं तु समाहितम् ।

---

1852. 1. BD. स्वन for ध्वनि; 2. C. हाराचौ for हरोऽच्चः. 1854. 1. C. सुभाषणम् for सुभाषितम्. 1856. 1. C. वेदनम् for देवनम्. 1857. 1. C. काकुवर्णनम्, D. काका वर्णनम् for काका वचनम्. 1861. 1. AB. कलिः, D. किलिः for कल्लिः. 1862. 1. BD. °ऽस्पष्टः for °ऽस्पष्टं, 1863. 1. BD. क्लिष्टं for म्लिष्टं.

अनक्षरमवाच्यं स्यात् स्यान्मृषार्थकमाहतम् ।
निरस्तं त्वरितं प्रोक्तं संगतं हृदयंगतम् ॥
असंगतमबद्धं स्यान्निष्ठुरं परुषार्थकम् ।
सूनृतं प्रियमश्लीलं ग्राम्यं लुप्तपदाक्षरम् ॥
ग्रस्तं सत्यमृतं तथ्यमसत्यं वितथानृते ।
अलीकं सान्त्वमुख्यानि पदानि त्रिषु तद्वति ॥

इति * वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
उक्तिभेदाध्यायः षोडशः ॥

——:❀:——

# १७

## नाट्याध्यायः

विपञ्ची वल्लकी वीणा नकुलोष्ठी पिनाकिनी ।
कुब्जिकालापिनी सैव सारङ्गी शततन्त्रिका ॥
तन्त्रीभिः सप्तभिः सैव संयुता परिवादिनी ।
तत्प्रभेदास्तु षड्कर्णः पौणो रावणहस्तकः ॥
हस्तिकोदुम्बरी चाथ वीणावादस्तु वैणिकः ।
महती' नारदमुनेर्वीणा वाण्यास्तु कच्छपी ॥
विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती' ।
वीणादिकं ततं वाद्यं कांस्यं तालादिकं घनम् ॥

---

❀ BD. om. वत्सकुलवामनभट्टबाणविरचिते. 1876. I. C om. I. 1876. 1877. I. AC. om I. 1877.

मुरजादिकमानद्धं सुषिरं वंशमुख्यकम् ।
चतु[1]र्विधमिदं वाद्यं वादित्रातोद्यनामकम् ॥
निःसाणपटहमड्डुकदुन्दुभयः पणवझर्झरमृदङ्गाः ।
[1]दर्दरवंशोड्डावुजडिण्डिमकिरिकिट्टशङ्खघर्घर[2]काः ॥
पाटः [1]कुब्जः पावो डुण्डुकिनी त्रिवलिका [2]सुरुली ।
कम्रा घण्टा [1]करटिर्मड्डुः करिका टट्टरी नादी ॥
भम्भा पविका तिमिला ढक्का धक्का च धक्कुली झक्का ।
पट्टवाद्यं च शृङ्गं च गोमुखं काहली द्वयोः ॥
समाने गीतगान्धर्वे रागास्तु ललितादयः[1] ।
नटनं[1] नर्तनं नाट्यं नृत्तं लास्यं तु तन्मृदु ॥
स्यादुद्धतं ताण्डवोऽस्त्री कैशिक्याद्यास्तु वृत्तयः ।
तौर्यत्रिकं नृत्तगीतवाद्यं नाट्यं च तत् त्रयम् ॥
शाखा स्यान्नृत्तहस्तानां वैचित्र्यात्मा[1] विव[2]र्तना ।
पूर्वरङ्गस्तु नान्द्यादिः करणं हरणं समे ॥
सत्त्ववागङ्गभावानां व्यञ्जकोऽभिनयः पुमान् ।
अङ्गहारोऽङ्गविक्षेपो मुखं(ख?)संध्यादि पञ्चकम् ॥

---

1880. 1. AB. tansp. l. 1880 between ll. 1887 and 1888; ABD. वाद्यं चतुर्विधं यत्तद् for 1880a. 1882. 1. B. दर्दुर for दर्दर; 2. घर्घुरकाः, BD. घर्घरिकाः for घर्घरकाः. 1883. 1. BCD. कुञ्जः for कुब्जः; 2. A. सुरली, D. सुरला for सुरुली. 1884. 1. A. करटीः for करटिः. 1887. 1. ABD read l. 1880. after l. 1887. 1888. 1. C. om. ll. 1888 and 1889. 1891. 1. A वैचित्र्यात्म for वैचित्र्यात्मा, 2 C. विकर्तना for विवर्तना.

स्युः षड्जर्षभगान्धारमध्यमाः पञ्चमस्तथा ।
धैवतश्च निषादश्च तन्त्रीकण्ठभवाः स्वराः ॥
स्वरारोहावरोहः स्यान्मूर्च्छनाथ स्वरांशकाः ।
श्रुतयो भूमिका वेषो रङ्गः स्यान्नटनस्थलम् ॥
भरतं नाट्यशास्त्रं स्यान्नाट्योक्तौ गणिकाज्जुका[1] ।
माताम्बा मारिषस्त्वार्यो वासूर्बालावुकः पिता ॥
आलिको भगिनी ज्याय[1]स्यावुत्तो भगिनीपतिः ।
आर्यपुत्रः पतिर्देवो राजा भट्टारकोऽपि सः ॥
भट्टारिका तज्जननी तत्पुत्री भर्तृदारिका ।
कुमारो युवराजः स्याद्राज्ञः स्यालस्तु राष्ट्रियः ॥
देवी कृताभिषेका स्त्री तदन्या[1]स्वेव भट्टिनी ।
भावो विद्वानवध्योक्तावब्रह्मण्यम[1]नुक्रमात् ॥
हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति ।
शृङ्गारवीरकरुणा हास्यरौद्रभयानकाः ॥
बीभत्साद्भुतशान्ताश्च नव नाट्यरस इमे ।
स्याच्चित्तविकृतिर्भावोऽनुभावस्तस्य बोधकः ॥
स्था[1]यिभावो विभावाद्यैः स्थायितां प्रापितो रसः ।
रतिहासक्रोधशोकजुगुप्सोत्साहविस्मयाः ॥

---

1899. 1. A. °र्जुका for °ज्जुका. 1901. 1. B. ज्येष्ठाथा°, D. ज्येष्ठा यस्या° for ज्यायस्या°. 1905. 1. C सैव for °स्वेव. 1906. 1. A. अथास्त्रियाम्. BD. अथ स्त्रियां for अनुक्रमात्. 1911. 1. A स्थायी for स्थायि.

भयं च स्थायिनो भावा विभावो भावदर्शकः ।
स्युः स्तम्भस्वेदरोमाञ्चाः स्वरसंभेदवेपथू ॥
वैवर्ण्यमश्रु प्रलय इति भावाश्च सात्त्विकाः ।
निर्वेदो ग्लानिशङ्कास्मृतिधृतिमतयः प्रीतिनिद्रावहित्था
व्रीडेर्ष्यासुप्तचसूया मरणमलसतोन्मादहर्षविमर्षाः ।
तर्कापस्मारमोहश्रममदजडिमव्याधिवेगा विषादो
गर्वश्चि[1]न्तौग्र्यूदैन्ये भयमपि चपलत्वं च संचारिभावाः ॥
स्तम्भो गद[1]मदक्रोधविषादभयवि[2]स्मितैः ।
स्याद्द्वेण मुदा चाथ [1]घर्मसंपीडनश्रमैः ॥
सुखहर्षज्वरग्लानिक्रोधव्यायामभीतिभिः ।
विषेण [1]प्रलयस्वेदसंभवः पुलकस्य तु ॥
विषामय(विषस्पर्श?)भयक्रोधशीतहर्षगदै[1]र्भवः ।
मदमुत्क्रोधरुग्भीतिज्वरैः स्यात्स्वरभेदनम् ॥
अश्रूदयस्तु शुग्धूलिजृम्भरु[1]क्शीतभीतिभिः ।
धूमातङ्काञ्जनासंगैरथ वैवर्ण्यसंभवः ॥
व्याधिशीतभयक्लान्तिक्रोध[1]तापविषस्मरैः ।
कम्पः स्याद्भीगदस्पर्शहर्षरोषज्वरादिभिः ॥

---

1917. 1. BD. गर्वः शान्तोग्रदैन्ये, C. गर्भच्छन्दोग्रदैन्ये for गर्वश्चिन्तोग्र्यूदैन्ये. 1918. 1. C. मदगद for गदमद; 2. C. विस्मयैः for विस्मितैः. 1919. 1. B. डम्भ, D. दम्भ for घर्म. 1921. 1. BCD. व्रीडया for प्रलय. 1922. 1. after l. 1922 C. adds l. 1927. 1924. 1. BC. रुक्छीत for रुक्शीत. 1926. 1. AD. क्रोधातप for क्रोधताप.

सर्वस्वभूतः पञ्चेषोः शृङ्गारः शुचिरुज्वलः ।
स्निग्धं निष्पन्दमन्दस्तिमितविहसितन्यञ्चिताकुञ्चितानि
स्मेरानन्दिप्रसन्नस्थिरमसृणम[1]हीत्यश्रुविष्फारितानि ।
प्रेङ्खोलोल्लासिलोलप्रणयिविलुलितप्रेमगर्भत्रिभङ्गि-
व्यासङ्गिस्फीतकान्तीन्यलसमदनकल्लादिरूचाञ्चितानि ॥
अलसं वलितं वक्रं मधुरं मन्द[1]मन्थरम् ।
कूणितोत्कण्ठिते मन्दमभिलाषि विलासि च ॥
एवमादीनि शृङ्गारवीचितानि मृगीदृशाम् ।
रणोत्साहोद्धतो वीरः कारुण्यं तु कृपा [1]घृणा ॥
दयानुकम्पा करुणा तत्रानुक्रोश इत्यपि ।
हासो हसश्च हास्यं च तत्प्रभेदाः स्युरुत्तरे ॥
स्मितमिह विकासिनयनं किञ्चिल्लक्ष्यद्विजाङ्कुरं हसितम् ।
मधुरस्वरं विहसितं सांसशिरःकम्पमुपहसितम् ॥
अपहसितं सास्राक्षं स्यादतिहसितं विकम्पितावयवम् ।
द्वे द्वे हसिते क्रमतस्ते ज्येष्ठे मध्यमे अधमे ॥
रौद्रमुग्रं प्रतिभयं भीमं भीष्मं भयानकम् ।
भीषणं दारुणं घोरं भैरवं च भयंकरम्[1] ॥
दशामूनि त्रिषू[1]भे तु बीभत्सविकृते त्रिषु ।
साध्वसं तु भयं त्रासो दरो भीर्भीतिरित्यपि ॥

---

1929. 1. B. मभित्र्यश्र, A. महीत्र्यश्रु, D. मभिकुश्य for महीत्यश्रु. 1931. 1. A. मद for मन्द. 1934. 1. A. घृणिः for घृणा. 1942. 1. A भयावहम् for भयंकरम्. 1943. 1. C. त्रिषु द्वे for त्रिषूभे.

अत्याहितं महाभीतिः समौ संवेगसंभ्रमौ ।
आश्चर्यमद्भुतं चित्रं चोद्यं पुंस्येव विस्मयः ॥
रीढावमाननावज्ञा परिभूतिस्तिरस्क्रिया ।
अवहेडः परिभवः परीभावोऽप्यनादरः ॥
मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा ह्रीतिरपत्रपा ।
व्री'डं स्नेहः पुमान् प्रेमा प्रियता प्रेम सौहृदम् ॥
ईप्सा लिप्सा स्पृहा वाञ्छा काङ्क्षेहेच्छातृषः समाः ।
तर्षो मनोरथः कामोऽभिलाषो लालसा द्वयोः ॥
उल्लासिका स्यादुत्कण्ठारतिरुत्कालिका च सा ।
अमर्षप्रतिघक्रोधकोपरोषाः स्त्रियौ परे ॥
रुट्क्रुधावक्षमेर्ष्याथ संरम्भः कोपवैकृतम् ।
अवष्टम्भस्मयाटोपगर्वाहंकारदर्पकाः ॥
उत्सेकश्चाभिमानश्च 'मानः स्यान्मानसोन्नतिः ।
गुणेषु दोषाविष्कारः स्यादसूयाथ शुक् स्त्रियाम् ।
मन्युः शोकोऽथ विद्वेषो विरोधो वैरमित्यपि ॥
समाः' स्युर्विप्रती'सारपश्चात्तापानुतापकाः ॥
क्षमा क्षान्तिस्तितिक्षा च सहनं मर्षणं समे ।
कण्टकोऽस्त्री रोम'हर्षो रोमाञ्चः पुलकः समाः ॥

---

1950. 1. ABD. व्रीलं for व्रीडं. 1957. 1. AC. मानो मनस उन्नतिः for 1957b. 1690. 1. D. समा सृष्टिः for समाः स्युः; 2. C. प्रतीकार. for प्रतीसार. 1962. 1. C. हर्षरोमाञ्चपुलकाः for हर्षो रोमाञ्चः पुलकः.

परिरम्भः परिष्वङ्ग आश्लेष उपगूहनम् ।
आलिङ्गनं [1]स्त्र्यङ्गपालिः समे [2]निंसनचुम्बने ॥
उत्तरे तत्प्रभेदाः स्युर्निमितं स्फुरितं [2]समम् ।
तिर्यग्भ्रान्तं सुंपुटकं जिह्वायुद्धावपीडिते ॥
गृहीता तु बलात् पत्या[1] नारी तेन निजाननम् ।
उदास्य यच्चुम्बयति तत् स्या[1]न्निमितकाभिधम् ॥
नायकेन मुदान्यस्तं जिघृक्षु[1]र्नायकाधरम् ।
न ददाति स्वोत्तरोष्ठं किञ्चित्प्रस्फुरिताधरा ॥
यत्तत् [1]स्फुरितकं स्त्री तु पत्या न्यस्तं निजानने ।
अधरं मृदु गृह्णाना स्वोष्टाभ्यां पतिलोचने ॥
पिधाय मीलिताक्षं तद् घट्टयेन्मृदु जिह्वया ।
यदि [1]घट्टितकं [2]तत् स्यान्मुग्धायां त्रितयं चरेत् ॥
गृह्णा[1]त्यभिमुखं सर्वमधरं यदि तत् समम् ।
साचीकृतेन स्वोष्ठेन सर्वं चाधरपल्लवम् ॥
वर्तुलीकृत्य [1]दत्तं यद् गृह्यते तिर्यगेव तत् ।
पार्श्वस्थः पतिरुन्नाम्य चिबुकं हरिणीदृशः ॥

---

1964. 1. A. स्त्र्यङ्कपालिः for स्त्र्यङ्गपालि°; 2. C. त्वचर for निंसन. 1965. 1. A. निर्जितं, BD. निमित for निमितं; 2. BCD. समे for समम्. 1967. 1. BD. पत्न्या for पत्या. 1968. 1. A. निर्मिता° for निमितका°. 1969. 1. C. नायिका° for नायका°. 1971. 1. C. यत्तत् प्रस्फुरितं for यत्तत् स्फुरितकं. 1974. 1. C. स्फुरितकान्ता स्यान्मुग्धायाः, ABD. स्फुटितकं तत् स्यान्मुग्धायां for घट्टितकं तत् स्यान्मुग्धायां; 2. A. तस्यां for तत् स्यात्. 1975. 1. A. गृहीत्वा° for गृह्णात्य°. 1977. 1. BD. दन्तं for दत्तं.

अवलम्ब्य कचान् गाढं 'भ्रामयित्वा ततोऽधरम् ।
रसवत्परिगृह्णाति यत्तत् स्याद् भ्रान्तकाभिधम् ॥
समतिर्यग्भ्रान्तकानां 'विधिनैवावपीड्य च ।
गृह्यते दन्तवसनं यत्तत् स्यादवपीडितम् ॥
अयाणां नहि पूर्वेषामस्यैवाधरपीडनम् ।
अङ्गुष्ठतर्जन्यग्रेण बहिराकृष्य कोमलम् ॥
अधरं दन्तवासोभ्यां पीडयेद्दशनैर्विना ।
तत् स्यात् संपुटकं तत्र सहा'साक्षेपजल्पितम् ॥
जिह्वायुद्धं यदि भवेत्तज्जिह्वायुद्धसंज्ञकम् ।
पूर्वं प्रसुप्तां दयितामागत्य निभृतं पतिः ॥
तस्याश्चुम्बति 'बोधार्थमधरं रसनिर्भरम् ।
शायिकाचुम्बनं तत् स्यादथ स्त्रीप्रेयसोर्मिथः ॥
सानुरागप्रतीत्यर्थं यद्भित्तिमुकुरादिषु ।
प्रतिमाचुम्बनं यत्तच्छायाचुम्बनसंज्ञकम्' ॥
मैथुनं स्यान्निधुवनं 'कुहरं सुरतं रतम् ।
ग्रामसंवेशनिर्वेशग्राम्यधर्मव्यवायकाः ॥
रतिरिन्द्राणिकाद्यं' तु करणं रतिबन्धनम् ।
नखक्षतं नखपदं नखाङ्कोऽस्त्री नखव्रणः ॥

---

1979. 1. AC. भ्रामयत्यायतो° for भ्रामयित्वा ततो°. 1981. 1. A. विधिनैवावविध्य, BD. विधिनेवावपीड्य, C. विधिनैव प्रपीड्य for विधिनैवावपीड्य. 1986. 1. A. सहसाक्षेपकल्पितम्; C. सहसाक्षेपलाञ्जतम् for 1986b. 1989 1. 1. रोधार्थम् for बोधार्थम. 1992. 1. C. संज्ञितम् for संज्ञकम्. 1993. 1. BD. मोहनं for कुहरं. 1995. 1. C. रतीन्द्रियाणि कार्यं for रतिरिन्द्राणिकाद्यं.

अधरनितम्बोरुगलस्तनगण्डारचितमात्तरोमाञ्चम् ।
अस्पष्टरेखमतिमृदुनखकर्माच्छुरितमवधिजातरु'जम् ॥
ग्रीवायां स्तनयोर्वा नखरपदं वक्रमर्धचन्द्रं' स्यात् ।
तत्रान्योन्याभिमुखं' रचितौ तावेव मण्डलकम् ॥
द्वित्र्यङ्गुलायता नाभीवङ्क्षणोरुककुन्दरे ।
कृता नखक्षती रेखा स्यात्तु तत्रैव सा यदि ॥
वक्रैव व्याघ्रनखरं ता 'मयूरपदं नखैः ।
पञ्चभिः स्तनयोः 'क्लृप्ताश्चूचुकाभिमुखा यदि ॥
न संगतानि प्रत्येकं वक्राणि च कुचाग्रके ।
स्पष्टानि पञ्चनखरपदान्येव शशप्लुतम् ॥
यदु'त्पलपलाशस्य प्रतिमाकृति दृश्यते ।
स्तनयोर्वा नितम्बे वा स्यात्तदुत्पलपत्रकम् ॥
स्मारकं तु प्रवसता पत्यात्मस्मृतिकारणात् ।
दत्ता क्षतिस्त्रिचतुरस्वरूपा जघने स्तने ॥
ऊर्वोर्वा स्यात्तु नवमं दन्तानां कर्म नर्मजम् ।
[ — — — — — — गूढकम् ] ?
अधरे वामगण्डे वा तदेवातिनिपीडनात् ॥
किञ्चिदुन्नतमुच्छूनं कौशलेनैव कल्पितम् ।
बिन्दुरोष्ठेऽल्पदेशायास्त्वचो दन्तद्वयक्षतिः ॥

---

1998. रुजः for रुजम्. 1999. 1. D. चन्द्रः for चन्द्रं. 2000. 1. C. मुख for मुखं. 2003 1. C. मयूख for मयूर. 2004. 1 BD. क्षिप्ताः for क्लृप्ताः. 2007 C. deletes ll. 2007 & 2008. 2011. 1. A. नवयं.; BCD. नवधा for नवमं. vide the critical notes.

अथ दन्तोष्ठसंयोगाभ्यासवैदग्ध्यतोऽधरे ।
दन्तक्षती रागमात्रचिह्ना 'क्षतविवर्जिता ॥
स्यात् प्रवालमणिर्बिन्दुमाला तूरुललाटयोः ।
बहुबिन्द्वात्मकं दन्तद्वितयारचितं क्षतम् ॥
वङ्क्षणालीकवक्षस्सु गले च रदनैः कृता ।
या क्षतिर्मणिमाला सा' बिन्दुमालानुकारिणी ॥
सृक्कदन्तद्वयाग्रैकसाध्यं युक्तं समन्ततः ।
पृथुमध्यमसूक्ष्मैः स्यात् खण्डाभ्रं' दशनक्षतैः ॥
स्तनयोर्मण्डलाकारमथ बह्वयोऽरुणान्तराः ।
दीर्घा वक्षोरुहतटे वैदग्ध्येन विनिर्मिताः ॥
दशनक्षतरेखाश्चेत् संहताः 'क्रोडचर्वितम् ।
अवहित्थं न नाकारगुप्तिरश्रु' तु रोदनम् ॥
आस्रमस्रं पुमान् बाष्पः स्यादथान्यस्य वस्तुनः ।
अन्यथाकरणं माया स्वत एवासतः पुरा ॥
सद्रूपोत्पादनं वा स्यादथ मन्त्रौषधादिभिः ।
अदेशकालपारोक्ष्यं परोक्षस्यैव वस्तुनः ॥
इन्द्रजालं प्रमीला तु भ्रुकुटिभ्रूकुटी' स्त्रियौ ।
तन्द्री तन्द्रा च कम्पस्तु वेपो वेपथुरेजनम् ॥

---

2016. 1. C. क्षति for क्षत. 2020. 1. C. स्याद्बिन्दु for सा बिन्दु. 2022. 1. AC. खण्डाभ्रं for खण्डाभ्रं. 2025. 1. BD. क्रोध for क्रोड. 2026. 1. BD. अश्रुत for अश्रु तु. 2031. 1. A. लाकुटी-भ्रुकुटी, B. लाकुटिभ्रुकुटी, D. लाकुटिद्रुकुटी for भ्रुकुटिभ्रूकुटी.

मोहो मूर्च्छा कश्मलं च रिङ्खणस्खलने[१] समे ।
कौतुकं कुतुकं कौतूहलं चापि कुतूहलम् ॥
अपदेशोपधिव्याजदम्भाः कपटमस्त्रियाम् ।
छलं लक्षं[१] पदं छद्म कैतवं कृतकं मिषम् ॥
छलना तु न ना शाठ्यं कुसृतिर्निकृतिः[१] स्त्रियौ ।
प्रतारणातिसंधानवञ्चनानि[१] प्रलोभनम् ॥
अकृत्याचरणं यत्तदासुरं विप्रलम्भनम् ।
कुहना त्वव्यये क्रुष्टं[१] [२]क्रन्दितं रुदितं समम् ॥
अविज्ञातेङ्गिताकारो भावो गाम्भीर्यमुत्सवः ।
उद्धवः क्षण उद्धर्षो महो मान्द्यमपाटवम् ॥
विप्रलम्भो[१] विसंवादो जृम्भस्तु त्रिषु जृम्भणम् ।
द्रवः[१] केलिः परीहासः क्रीडा लीला च नर्म च ॥
मृगीदृशां च लीलाद्याः क्रियाः[१] शृङ्गारभावजाः ।
प्रियानुकरणं लीला मनोवागङ्गचेष्टितैः[१] ॥
वागङ्गसत्त्वाभिनयभूषास्थानविपर्ययः ।
त्वरया कल्पितोऽभीष्टदर्शने यः स विभ्रमः ॥
प्रेयसः संगसमये दृष्टिभ्रूवक्त्रकर्मणाम् ।
विशेषो यो विलासः स्याद्विच्छित्तिस्तु स्वमण्डने ॥

---

2033. 1. C. रिङ्खणं स्खलनं for रिङ्खणस्खलने. 2036. 1. C. लक्ष्म for लक्षं. 2037. 1. B. निसृतिः for निकृतिः. 2038. 1. A. वञ्चना स्त्री for वञ्चनानि. 2040. 1. CD. कृष्टं for क्रुष्टं; 2. BD. रुदितं क्रन्दित for क्रन्दितं रुदितं. 2043. 1. A. लम्भोऽथ संवादः for लम्भो विसंवादः. 2044. 1. B. भ्रमः for द्रवः. 2045. 1. A. क्रमाच्छृङ्गार for क्रियाः शृङ्गार. 2046. 1. BD. चेतनैः for चेष्टितैः.

वस्त्रमाला[1]ऽङ्गरागादेर्न्यासोऽनादरकर्मणा ।
रुदितस्मितहर्षादेः संकरः किलिकिञ्चितम् ॥
प्रिय[1]लीलाकथालापहेलास्तुतिनिदर्शनैः ।
तद्भावभावितं मोट्टायितमेवाथ योषिताम् ॥
सौख्योपचारैः सानन्दाधरकेशग्रहादिभिः ।
दुःखोपचारवत् कुप्येद् बहिः कुट्टमितं तु तत्[1] ।
सुकुमारोऽङ्गविन्यासः[1] सभ्रूनेत्राधरक्रियः ।
ललितं विहृतं तु स्यात् प्राप्तकालमनुत्तरम् ॥
मानेर्ष्याभ्यां स्वभावाद्वा लज्जातिशयतोऽपि वा ।
वसुधापर्वतारण्यचतुष्पात्खगपद्दृणैः ॥
उक्तिनाट्यादिभिश्चाष्टावध्याया इह[1] निर्मिताः ॥

इति *वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे नाट्याध्यायः सप्तदशः ॥

॥ इति द्वितीयः काण्डः समाप्तः ॥

---

तृतीयः काण्डः

# १८

## मनुष्याध्यायः

मानवा मनुजा मर्त्या मनुष्या मानुषा नराः ।
पुरुषाः स्युः पञ्चजनाः पुमांसः पूरुषा नरः ॥

---

2051. 1. D. माल्या° for माला° 2053. 1. BD. प्रिया for प्रिय. 2056. 1. C. ततं for तु तत्. 2057. 1. AD. विन्यास° for विन्यासः. 2061. 1 C. अध्यायाश्चेह for अध्याया इह. *BD. om. वत्सकुलवामनभट्टबाणविरचिते.

पौरुषं पौरुषेयं च पुरुषाणां कदम्बके ।
मानुष्यकं मनुष्याणामथ स्त्री वनिता वधूः ॥
अङ्गना योषिदबला नारी वामा नितम्बिनी ।
प्रतीपदर्शिनी योषा कामिनी वामलोचना ॥
ललना रमणी रामा महिला तनुमध्यमा ।
तन्वी सीमन्तिनी कान्ता प्रमदा वरवर्णिनी ॥
वरारोहा मत्तकाशिन्यभीष्टा वल्लभा प्रिया ।
सती पतिव्रता साध्वी कन्याणी पतिदेवता ॥
अपांसुला सुचारित्रा भामिनी कोपना समे ।
कुलपालिका कुलस्त्री भार्या पत्नी सधर्मिणी जाया ॥
स्युः पुंसि भूम्नि दाराः स्याच्च[1] पुरन्ध्री कुटुम्बिनी गृहिणी ।
क्लीबे कलत्रमध्यूढाधिविन्नाथ स्वयंवरा ॥
वर्या पतिंवरा कन्या कुमारी नागतार्तवा[1] ।
सा तु दृष्टरजा राका चिरण्टी स्यात् सुवासिनी ॥
पतिवत्नी भर्तृमती प्राज्ञा प्राज्ञी च धीमती ।
समाः स्नुषावधूजन्यास्तरुणी युवतिः[1] समे ॥
पाञ्चालिका पुत्रिका स्त्री वस्त्रदन्तादिनिर्मिता ।
स्याल्लेप्य[1]मय्यञ्जलिका निष्कला विगतार्तवा ॥
स्यात् स्त्रीधर्मिण्युदक्याविरात्रेयी मलिनी तथा ।
रजस्वला पुष्पवती ऋतुमत्यार्तवं रजः ॥

---

2074. 1. AB. स्यात्तु for स्याच्च. 2076. 1. A. सुगतार्तवा for नागतार्तवा. 2079. 1. AC. युवती for युवतिः. 2081. BD. लेख्य, C. लेख for लेप्य.

पुष्पं सखी वयस्याली दूती संचारिका समे ।
गर्भिण्यापन्नसत्त्वा स्यादन्तर्वत्नी च गुर्विणी ॥
नग्निका स्त्री कोट्टवी¹ स्यात् सैरन्ध्री शिल्पकारिका ।
विदग्धा वाणिनी धूर्ता स्वैरिणी पुंश्चली त्वरी ॥
धर्षिणी कुलटा बन्धक्यसती पांसुला च सा ।
विश्वस्ता विधवा रण्डा जातापत्या प्रसूतिका ॥
प्रजाता च प्रसूता च गार्भिणं¹ गर्भिणीगणः ।
रूपाजीवा तु गणिका वेश्या वारविलासिनी ॥
पण्याङ्गना सत्कृता सा वारमुख्याथ तद्गणः ।
गाणिक्यं तद्भृतौ भोगः कुट्टनी शंभली समे ॥
आशीःस्वस्त्ययनाभिज्ञा वृद्धवेश्या महत्तरी ।
भुजंगः पल्लवो धूर्तो विटः षिड्गः समा इमे ॥
मैथुनेच्छावती या सा वृषस्यन्ती च कामुकी¹ ।
रत्यै कान्तार्थिनी यैति संकेतं साभिसारिका ॥
नाथः कामयिता पतिर्वरयिता कम्रो धवः कामनो
भर्ता प्राणसमः प्रियः सहचरः कान्तोऽभिकः कामुकः ।
प्राणेशः कमितानुगो¹ रतिगुरुर्नेता वरो वल्लभो
निर्वेष्टा परिणायकश्च कमनोऽभीकश्च सव्यूढ् सुहृत् ॥
अशिश्वी शिशुहीना स्यादवीरा निर्धवात्मजा ।
स्त्रैणं स्त्रीणां समूहे स्याद्युवतीनां तु यौवतम् ॥

---

2086. 1. C. कोटवी for कोट्टवी. 2090. 1. C. गार्भिण्यं for गर्भिणं 2096. 1. A. कामिनी for कामुकी. 2099. 1. C कमितानुकः, BD. कमिताभिकः for कमितानुगः ।

स्त्रीपुंसलक्षणा पोटा वीरमाता तु वीरसूः ।
उपाध्यायान्युपाध्यायी मातुलानी तु मातुली ॥
आचार्यानी[1] च पुंयोग अर्यी च क्षत्रियीति च ।
अथोपाध्याय्युपाध्याया क्षत्रिया क्षत्रियाण्यपि ॥
अर्यार्याणी तथाचार्या सप्त पुंयोगवर्जिताः ।
स्यादाभीरी महाशूद्री जातिपुंयोगयोः समा ॥
शूद्रा तु जातावेव स्याच्छूद्री शूद्रस्य योषिति ।
विप्रश्निका त्वीक्षणिका दैवज्ञा च समा इमाः ॥
उद्भवो जातिरुत्पत्तिर्जनिर्जननजन्मनी ।
जनुश्च[1] चेतनो जन्मी जन्तुर्जन्युः[2] शरीरभाक् ॥
प्रेतः परेतविगतासुमृतप्रमीत—
प्राप्तान्त[1]संस्थितपरासुविलीननष्टाः ।
एते दश त्रिषु कटः कुणपः शवोऽस्त्री
चित्या चिता चितिरथ प्रलयोऽत्ययोऽन्तः ॥
लयो[1] नाशः कालधर्मो दीर्घनिद्रा च पञ्चता ।
मरणं निधनं मृत्युर्द्वयोर्जीवोऽसुधारणम् ॥
आयुर्जीवितकालः स्यादरिष्टं मृतिलक्षणम् ।
प्रायो वयोऽसवः प्राणाः पुंसि भूम्न्यथ जीविका ।
आजीवश्चेष्टनं त्वीहा जीवातुर्जीवनौषधम् ।

---

2104. 1. ABC. आचार्याणी for आचार्यानी. 2111. 1. A. जन्यं च for जनुश्च; 2. BC. जन्यः for जन्युः. 2112. 1. BD. संप्रथितलीन-परासु for संस्थितपरासुविलीन°. 2114. 1. C. कालधर्मो लयो नाशः for 2114a.

श्मशानं स्यात् पितृवनं[1] रुद्रावासः परेतभूः ।
देहोऽस्त्री विग्रहः कायः पिण्डो मूर्तिस्तनुस्तनूः ॥
वपुः संहननं वर्ष्म गात्रं क्षेत्रं कलेवरम् ।
शरीरमङ्गेऽवयवप्रतीकापघनास्त्रयः ॥
अस्त्रियामङ्घ्रिचरणौ पादः पत् पदमस्य तु ।
अग्रे स्यात् प्रपदं गुल्फौ तद्ग्रन्थी घुटिके तयोः ।
अधः पार्ष्णिः पुमान् जङ्घा प्रसृता जानु न द्वयोः ॥
अष्ठीवदस्त्री[1] जान्वोः पर्वोर्वष्ठीवमित्यदः[2] ।
ऊरु[1]आष्ठीवदित्येते सक्थ्यूरुः[2] पुंसि वङ्क्षणः ॥
तत्सन्धावथ पायुर्ना गुदापाने अथ द्वयोः ।
वस्तिर्नाभेरधो नाभिर्द्वयोरेवं कटः कटी ॥
श्रोणिः कलत्रमारोहः कटिप्रोथौ स्त्रियां स्फिजौ ।
पश्चाद्भागो नितम्बोऽस्त्री स्त्रीकट्या जघनं पुरः ॥
नितम्बे[1] कूपकौ यौ तौ क्लीबे स्यातां कुकुन्दरे[2] ।
साधनं मेहनं शेफः शिश्नो दण्डः स्मरध्वजः ॥
मेढ्रो[1]ऽण्डं कोशवृषणावथ योनिर्द्वयोर्भगम्[2] ।
उपस्थं पृष्ठवंशस्य क्लीबे स्यादधरे त्रिकम् ॥
चरमं वपुषः पृष्ठं पिचण्डजठरोदरम्[1] ।

2119 1. AB वर्णं for वनं. 2126. 1. आष्ठी° for अष्ठी°; 2 C. इत्यपि for इत्यदः. 2127. 1. BD. उरुः for ऊरुः; 2. B. सक्थ्यूरू for सक्थ्यूरुः. 2132. 1. C. कूपकौ तु नितम्बस्थौ for 2132a; 2. BD. ककुन्दरे for कुकुन्दरे. 2134. 1. AD. मेढ्रो° for मेढ्रो°; 2. C. भगः for भगम्. 2136. 1. C. जठरोदराः for जठरोदरम्.

तुन्दं कुक्षिर्न ना क्रोडं वत्सो वक्ष उरः समे ॥
मध्यमं चावलग्नं[1] स्याद्[2] विलग्नं मध्यमस्त्रियाम् ॥
स्तनौ कुचौ तयोरग्रं चूचुकं भुजमूर्ध्नि तु ।
स्कन्धोंऽसोऽस्त्री तयोः सन्धिर्जत्रुणी दोर्नपुंसके ॥
भुजबाहू द्वयोर्मूले तयोः कक्षौ तयोरधः ।
पार्श्वमस्त्री कफोणिस्तु कूर्परस्तस्य तूपरि ॥
प्रकाण्डस्तदधः पुंसि प्रकोष्ठोऽथ करः शयः ।
पाणिर्हस्तः पञ्चशाखस्तौ युतावञ्जलिर्नरि ।
मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।
अङ्गुल्यः करशाखाः स्युस्तर्जनी तु प्रदेशिनी ॥
अङ्गुष्ठस्तर्जनी मध्यानामिका च कनिष्ठिका ।
पुनर्भवः कररुहो [1]नखोऽस्त्री नखरोऽस्त्रियाम् ॥
प्रसृतिः कुञ्चितः पाणिः पाणौ तु प्रतताङ्गुलौ ।
त्रयश्चपेटप्रतलप्रहस्ता द्वौ तु संहतौ ॥
स्यातां करौ [1]सिंहतलप्रतलौ सव्यदक्षिणौ ।
वितस्तिः सकनिष्ठे स्यादङ्गुष्ठेऽथ प्रकोष्ठकः ॥
ततपाण्यङ्गुलिर्हस्तः स तु मुष्ट्यैव बद्धया ।
पुंसि रत्निररत्निस्तु निष्कनिष्ठेन मुष्टिना ॥
पौरषं तु त्रिपूद्बाहुनृमानेऽथ सहस्तयोः ।
व्यामः स बाह्वोस्ततयोर्यत्तु स्यात्तिर्यगन्तरम् ॥

---

2138. 1. C. च वलग्नं for चावलग्नं; 2 B. च for स्यात्. 2148. 1. AC. नखश्च for नखोऽस्त्री. 2151. 1. ABD. संहतल for सिंहतल.

शिरोधिः कन्धरा ग्रीवा सा तु रेखात्रयाङ्किता । 
कम्बुग्रीवावटुर्घाटा कृकः पुंसि कृकाटिका ।
कण्ठो गलो मुखं वक्त्रं लपनं वदनानने ।
तुण्डास्ये नासिकानासाघोणागन्धवहाः स्त्रियः ।
घ्राणमोष्ठाधरौ दन्तच्छदौ दशनवाससी ।
आस्यं मुखबिलं दन्ता दशना रदना रदाः ।
रसज्ञा रसना जिह्वा समाने तालुकाकुदे ।
सृक्कणी त्वोष्ठयोः प्रान्तौ चिबुकं त्वधरादधः ।
गण्डः कपोलस्तद्भागे गल्लः स्त्री तत्परा हनुः ।
श्रवणं तु श्रवः श्रोत्रं कर्णः शब्दग्रहः श्रुतिः ।
शष्कुली कर्णवेष्टः स्यात् कर्णजाहस्तदन्तिकम् ।
दृग्दृष्टिरक्षि नयनं लोचनं चक्षुरीक्षणम् ।
अम्बकं दर्शनं नेत्रं निध्यानमवलोकनम् ।
मलं तु दूषिका दृष्ट्योस्तारकास्तु कनीनिका ।
अपाङ्गश्चक्षुषोरन्ते कटाक्षोऽपाङ्गदर्शने ।
भ्रुवौ तु चक्षुषोरूर्ध्वे लोचकस्तु मणिभ्रुवि ।
ललाटमलिकं फालं निटिलं गोधिरित्यपि ।
ऊर्णा भ्रूमध्यगावर्ते तन्मध्ये कूर्चमस्त्रियाम् ।
उत्तमाङ्गशिरःशीर्षकानि मस्तकमस्त्रियाम् ।
मूर्धाथ कुन्तलं केशो वालः शिरसिजः कचः ।

2157. l. BD. त्रयान्विता for त्रयाङ्किता. 2164. l. AD. सृक्किणी for सृक्कणी. 2165. l. C. गल्लोऽस्त्री for गल्लः स्त्री. 2172. l. मरुद्भुवि, BD. मणिभुवि for मणिभ्रुवि. 2175. l. AB. om. l. 2175.

शिरोरुहोऽथ तद्वृन्दे कौशिकं कैश्यमित्युभे ।
कबरी केशवेशः स्यादलकाश्चूर्णकुन्तलाः ।
भाल[1]गात्रे भ्रमरकाः परौ तु विशदे कचे ।
(यौ) शीर्षण्यशिरस्यौ द्वौ [2]काकपक्षः शिखण्डकः[3] ।
केशान्तःपद्धतिः स्त्रीणां सीमन्तोऽथ कचात् परे ।
पाशः पक्षश्च हस्तश्च प्रशंसावाचकास्त्रयः ।
केशबन्धविशेषे स्युर्वेणीधम्मिल्लमुख्यकाः ।
असंस्काराः कचाः श्लिष्टाः व्रतिनस्ते जटा सटा ।
दोषा वातादयो वायुः पित्तं [1]श्लेष्मा कफः समौ ।
व्याधिरामय आतङ्को गदो रोगो रुजा च तत् ।
क्षयः शोषो राजयक्ष्मा यक्ष्मा[1] जूर्तिर्जरोऽन्तकः ।
अर्शस्तु पायुकीलः स्यात् प्रतिश्यायस्तु पीनसः ।
क्षुतं स्त्री क्षुत् क्षवः पुंसि कासः क्षवथुरित्यपि[1] ।
नाडीव्रणः पुमानीर्मिमरुः क्लीबे व्रणोऽस्त्रियाम् ।
वमिः प्रच्छर्दिका छर्दिरुद्वान्तिर्वमथुः पुमान् ।
शोथस्तु श्वयथुः शोफो ग्रहणीरुक् प्रवाहिका[1] ।
प्रमेहो बहुमूत्रं स्यात् स्फोटकः पिटकास्त्रिषु ।
क्लीबे किलासंसिध्मे द्वे श्वित्रं[1] कुष्ठं पिचुः पुमान् ।

---

2179. 1. A. भालकस्ते, B. फालगात्रे, C. बालकास्ते, D. फालकास्ते for भालगात्रे. 2180 1. C. शीर्षण्यौ तु° B. शिरीषण्यशिरस्ये द्वौ D. शीरीषण्यशिरष्ये द्वे; 2 A. कङ्क for काक; 3. D. शिखण्डजः for शिखण्डकः. 2185. 1. A. श्लेष्म कफ, B. श्लेष्मकफौ for श्लेष्मा कफः. 2189 1. AC. इत्यसौ for इत्यपि. 2192. 1. C. प्रवाहिनी for प्रवाहिकः. 2194. 1. A. श्वित्रः, C. श्वित्री for श्वित्रं.

कण्डूः खर्जूश्च कण्डूया पामा पामा विचर्चिका ।
कच्छूः स्त्रियामथो पादवल्मीकः स्याद्विपादिका ।
मन्दाभ्यान्ताभ्यमितव्याधितविकृतातुरापटुग्लानाः ।
आर्तामयाविरुग्णग्लास्नव उल्लाघ आमयान्मुक्तः ।
कल्यो निरामयो वार्तो वातरोगी तु वातकी ।
अन्धोऽचक्षुरतीसारी यः स एवातिसारकी[1] ।
न्युब्जो भुग्नः कुब्जो गडुलः[1] कुकरः कुणिर्जडः स्तब्धः ।
श्रोणः पङ्गुः खोडः खञ्जः कोलोऽथ[1] केकरो वलिरः ।
दुश्चर्मणि शिपिविष्टः खल्वाटः खलतिरेडबधिरौ तु ।
अश्रुतिरथैडमूकोऽ[1]वाक्श्रुतिरपनासिको विग्रः ।
अप्यवटीटमवभ्रटमवनाटं विनतनासिकं प्राहुः ।
खरणास्तु खरणसः स्यान्नःक्षुद्रः क्षुद्रनासिकः ।
खुरणाः खुरणस उन्नतदन्ते दन्तुर एकेक्षणः काणः ।
श्लेष्मल[1]माहुः [2]श्लेष्मणमर्शसमर्शोयुतं[3] तथाश्मश्रुम् ।
तूब[1]रमल्पशरीरं पृश्नि खर्वस्तु वामनो ह्रस्वः ।
मूर्च्छालो मूर्च्छितो मूर्तो मिर्मिरस्तब्धलोचनः ।
किलासी सिध्मलः पामरोगी पामनकच्छुरौ ।
कण्डूतियुक्तः कण्डूलो दद्रुरोगिणि दद्रुलः ।

---

2200. 1 C. सारकः for सारकी. 2201. 1. B. गडुरः for गडुलः.
2202. 1. A. कैकरः for केकरः, 2204 1. C. अथैक for अथैड;
2. B. अवाक्छ्रुतिः for अवाक्श्रुतिः. 2208. 1. B. श्लेष्मणं for श्लेष्मलं;
2. C. श्लेष्मिणम for श्लेष्मणम्; 3. AC. युतमथा° for युतं तथा°.
2209 1. C तूबरम for तूबरम्.

चिल्लः पिल्लश्च चुल्लश्च क्लिन्नास्ये क्लिन्नचक्षुषि ।
मूकस्तु यमनो वाचि सिरालस्तु सिरान्वितः ।
स्याच्छ्मश्रुलः[1] श्मश्रुवति ह्रीणो ह्रीतश्च लज्जितः ।
लोहलः स्यादस्फुटवाक् प्रज्ञुः प्रगतजानुकः ।
ऊर्ध्वजानुक ऊर्ध्वज्ञुः[1] संज्ञुः संगतजानुकः ।
विकलाङ्गस्तु पोगण्डो बृहत्कुक्षिः पिचण्डिलः ।
तुन्दिकस्तुन्दिलस्तुन्दी तिलकस्तिलकालकः ।
केशवः केशिकः केशी गर्ह्यवादी तु कद्वदः ।
शिश्विदानो दुराचार उपक्रान्तश्चिकित्सितः[1] ।
कुण्ठः क्रियासु मन्दः स्यान्मन्दाभ्यन्तादयस्त्रिषु ।
रोगहार्यगदंकारभिषग्वैद्यचिकित्सकाः ।
भेषजभैषज्यौषधमगदो जायुश्च शुक्रवीर्ये तु ।
रेतस्तेजश्चेन्द्रियबीजे करणं समे हृद्धृदये ।
पिशितपलपललतरसक्रव्यामिषजाङ्गलानि मांसे स्युः ।
असृगस्रुरुधिरलोहितरक्तक्षतजास्रशोणितं तु समम् ।
पक्वं मांसं भटित्रं स्याच्छूल्यं शूलाकृतं च तत् ।
वल्लूरं त्रिषु तच्छुष्कं समाने तूल्यपैठरे ।
मांसभेदे तु [1]वृक्कोऽस्त्री [2]डिम्बः पुंस्युण्डुकोऽस्त्रियाम् ।

2215. 1. C. स्यात् श्मश्रुलः for स्याच्छ्मश्रुलः. 2217. 1. C. ऊर्ध्व-ज्ञुरूर्ध्वजानुः स्यात् for 2217a. 2221. 1. AD. चिकित्सकः for चिकित्सितः. 2230. 1. A. प्रक्को°, B. पृक्का°, D. वृक्ना° for वृक्को°; 2 A. डिम्भः for डिम्बः.

समे तु तिलकक्लोम्नी समे आन्त्रपुरीतती[1] ।
समे तु गोर्दमस्तिष्के द्वौ गुल्मप्लीहनौ[1] समौ ।
कालखण्डं यकृत् क्लीबे स्नायुर्ना वस्नसा स्त्रियाम् ।
मेदो वपा वसा नाडीसिराधमनयः समाः ।
पश्चाद्ग्रीवासिरा मन्या [1]किट्टं तु मलमस्त्रियाम् ।
पुरीषं शमलं वर्चः शकृद्विष्ठाविशौ स्त्रियौ ।
गूथ[1]वर्चस्कमस्त्री स्यादुच्चारावस्करौ समौ ।
प्रस्रावो न द्वयोर्मूत्रं लाला त्वास्यभवं जलम् ।
सृणिका स्यन्दिनी [1]सैव स्वेदघर्मौ निदाघवत् ।
स्यादस्थि कीकसं कुल्यं करोटिः स्त्री शिरोस्थनि ।
कर्परस्तु [1]कपालोऽस्त्री नलकं[2] त्वस्थि बाहुजम् ।
स्याच्छरीरास्थि कङ्कालः[1] पृष्ठास्थि[2] स्त्री कशेरुका ।
वंशः[1] पृष्ठप्रधानास्थि पार्श्वास्थनि तु पार्शुका ।
त्वक् स्त्रियामजिनं चर्म माता तु जननी प्रसूः ।
जनयित्री सवित्री च तातो जनयिता पिता ।
जनकः सविता पुत्रस्तनयः सूनुरात्मजः ।
नन्दनस्तनया पुत्री दुहिता च सुता तयोः ।
समे तोकमपत्यं द्वे [1]औरस्यस्त्वौरसोऽप्युभौ ।

---

2231. 1. A. पुनीतनी for पुरीतती. 2232. 1. BD. प्लीहिनौ, C. प्लीनहौ for प्लीहनौ. 2235. 1. A. विट्टं for किट्टं. 2237. 1. AD. गूढ for गूथ. 2239. 1. C. चैव for सैव. 2241. 1. A. कपोलो° for कपालो°; 2 C. नलकस्त्वस्थि for नलकं त्वस्थि. 2242. 1. BD. कङ्कालं for कङ्कालः; 2. BD. पृष्ठास्थिन for पृष्ठास्थि. 2243. 1. C. om. l. 2243. 2248. 1. BD. उरस्यः for औरस्यः.

स्वजातेऽथ पितृभ्राता पितृव्यो भगिनी स्वसा ।
स्वस्रीयो[1] भागिनेयः स्याद् दौहित्रो दुहितुः सुतः ।
जामाता दुहितुर्भर्ता मातुर्भ्राता तु मातुलः ।
मातुली[1] मातुलान्यस्य जाया धात्र्युपमातरि ।
पुत्रस्य तनयः पौत्रो नप्ता पौत्रस्य नन्दनः ।
पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु तयोः पिता ।
ननान्दा भगिनी पत्युर्भ्रातृजाया प्रजावती ।
पत्न्यास्तु भ्रातरः स्यालाः स्युः पत्युर्देवृदेवरौ ।
भ्रातृवर्गस्य जाया या [1]यातरस्ताः परस्परम् ।
भ्रात्रीयो[1] भ्रातृजः पुत्रौ पुत्री पुत्रश्च तावुभौ ।
पितरौ मातापितरौ मातरपितरावथ श्वशुरौ ।
श्वश्रूश्वशुरौ भ्राता भगिनी च भ्रातरावेतौ ।
पितामहश्च[1] प्रपितामहश्चोभौ यथाक्रमम् ।
पितरौ पितृतत्पित्रोरेवं मातामहादिकम् ।
दम्पती जम्पती जायापती च[1] द्विवचोऽन्तकौ ।
ज्ञातेयं ज्ञातिभावे स्याद् बन्धुता तत्कदम्बके ।
पा[1]रस्त्रैणेयकानीनौ पर[2]स्त्रीकन्ययोः सुतौ ।
काल्याणिनेयः कानिष्ठिनेयो माध्यमिनेयकः ।

---

2250. 1. B. स्वस्रेयः for स्वस्रीयः. 2252. 1. C. om. 1. 2252. 2257. 1 B. यातरः स्युः for यातरस्ताः. 2258. 1. A. भ्रात्रेयः for भ्रात्रीयः. 2261. 1. C. reads 1. 2261 as: पितामहः पितृपिता तत्पिता प्रपितामहः ।. 2263. 1. C. द्विवचनान्तकौ for च द्विवचोऽन्तकौ. 2265. 1. BD. वार for पार ; 2, BD. वर for पर.

ज्यैष्ठिनेयश्च चत्वारः कल्याण्याद्याः[1] सुताः क्रमात् ।
अथ बान्धकिनेयश्च बन्धुलश्चासतीसुतौ[1] ।
कौलटेरः[1] कौलटेय इत्युभौ कुलटासुते ।
मातुः [1]संभद्रपूर्वायाः [2]सुतौ सांमातुरादिकौ ।
सुतौ द्वैमातुरः षाण्मातुरश्चोभौ यथाक्रमम् ।
द्वयोः षण्णां च मातॄणां वैमात्रेयो विमातृजः ।
पैतृष्वसेयः स्यात् पैतृष्वस्रीयश्च पितृष्वसुः ।
सुतो मातृष्वसुश्चैवं कुण्ड[1]गोलौ च जारजौ ।
अमृते[1] च मृते पत्यौ [2]कृपाकन्या त्वलंकृता[3] ।
समानोदर्यसो[1]दर्यौ सगर्भ्यः [2]सहजश्च सः ।
सनाभयः सपिण्डाः स्युर्बन्धुस्वज्ञातिबान्धवाः ।
सगोत्रः स्वजनश्चाथ जारश्चोपपतिः समौ ।
गर्भाशयो जरायुर्ना स्यादुल्बं कललोऽस्त्रियाम् ।
प्रतिमासो वैजननो गर्भो[1] भ्रूणः समावुभौ[2] ।
स्तनंधयोत्तान[1]शयौ स्तनपा[2] तु स्तनंधयी[3] ।
वटुर्बालो माणवको माणव्यं तत्कदम्बके ।

2267. 1. C. कल्याणादि for कल्याण्याद्याः. 2268. 1. C. सुतः for सुतौ. 2269. 1. A. कौलदेयः कौलटेरः for 2269a. 2270. 1. C. संभूत for संभद्र ; 2. सुते साम्मातुरादिकम्, D. सुते षाण्मातुरादिकम्. for 2270b. 2275. C. reads l. 2275 as: अमृते जारजः कुण्डो मृते भर्तरि गोलकः ।; 2. ABD. कूपः for कृपा; 3. A. °कृतौ for °कृता. 2276. 1. AC. सोदर्य° for सोदर्यौ; 2. C. सहजाश्च ते for सहजश्च सः. 2280. 1. BD. गर्भभ्रूणौ for गर्भो भ्रूणः; 2. A. द्वमावुभौ for समावुभौ. 2281. 1. A. °शय for शयौ; 2. BD. स्तनधी, AC. स्तनपी for स्तनपा; 3. A. स्तनंधया for स्तनंधयी.

तारुण्यं यौवनं बाल्यं शिशुत्वं शैशवं समम् ।
केशादौ जरया शौक्ल्यं पलितं विस्रसा जरा ।
जरठः स्थविरो वृद्धः प्रवया दशमी जरन् ।
ज्यायान् जीर्णश्च वर्षीयान् वृद्धसंघे तु वार्धकम् ।
पूर्वजस्त्वग्रियो ज्येष्ठो ज्यायानग्रज इत्यपि ।
जघन्यजकनीयांसौ कनिष्ठोऽवरजोऽनुजः ।
यवीयांश्च यविष्ठश्च वयस्थस्तरुणो युवा ।
सौभ्रात्रं भ्रातृता साध्वी त्रिषु स्युर्जरठादयः ।
अनुलेपोऽङ्गरागः स्याद्विच्छित्तिर्वर्णकोऽस्त्रियाम् ।
कुङ्कुमं घुसृणं रक्तं बाह्लीकं पीतनं वरम् ।
वासनीयककाश्मीरधीरलोहितचन्दनम् ।
सेव्यपिञ्जरसंकोचपिशुनाग्निशिखानि च ।
अगरु[1] कृमिजं लोहं राजार्हं [2]जाङ्गलान्नकम् ।
वंशकं[1] वंशिकं काकतुण्डं लघु च जाङ्गलम् ।
काला[1]गर्वथ तद[2]गरु मङ्गल्यं यत्तु मल्लिगन्धि स्यात् ।
कालानुसार्यजावककालेयान्यत्र पीतसारे स्युः ।
पीतचन्दनमर्कोष्ठं बालाहार्यं किरातजम् ।
पत्राङ्गं रञ्जनं [1]रक्तचन्दनं च कुचन्दनम् ।

---

2295. 1. AD. अगुरु for अगरु; 2. B. लाङ्गलान्नकम्, C. जाङ्गलालुकम्, D. राङ्गलानकम् for जाङ्गलान्नकम्. 2296. 1. A. वंशिकं वंशकं for वंशकं वंशिकं; C. वंशजं for वंशकं. 2297. 1. A. कालागुर्वथ for कालागर्वथ; 2. A. तद्गुरु for तदगरु. 2300. 1. A. रक्तं for रक्त.

कर्पूरा'गरुकस्तूरीतक्कोलैर्यक्षकर्दमः ।
घनसारसिताभ्रौ तु चन्द्राह्वो हिमवालुका' ।
कर्पूरोऽस्त्री जातिफलजातिकोशे समे' उमे ।
श्रीसंज्ञं देवकुसुमं लवङ्गं च परे समे ।
तक्कोलकोशफलके' त्रिषु 'भावितवासिते ।
संस्कारो गन्धमाल्याद्यैः केशादेरधिवासनम् ।
बहुरूपः सर्ज्जरसो रालः सर्वरसोऽपि च ।
स्याद्यक्षधूपोऽथ वृकधूपः स्यात् पुंसि यावनः ।
तुरुष्कः पिण्डकः सिल्हश्चाथ कृत्रिमधूपकः' ।
श्रीवासः पायसो रक्तशीर्षकः सरलद्रवः ।
श्रीवेष्टोऽथ स्थासकस्तु चर्चा चार्चिक्यमित्यपि ।
माल्यदाम्नी तु माला स्रक् केशमध्ये तु गर्भकः ।
ललामकं पुरोन्यस्तं प्रालम्बमृजुलम्बि यत् ।
प्रभ्रष्टकं शिखालम्बि तिर्यक् क्षिप्तं तु वक्षसि ।
वैकक्ष्यकमथोत्तंसवतंसापीडशेखराः ।
शिखासु' कर्णपूरे तु द्वावुत्तंसावतंसकौ ।
निर्माल्यं तूज्झितं माल्यमथाभरणमण्डने ।
विभूषणमलंकारः परिष्कारः परिष्क्रिया ।

---

2301. 1. D. कर्पूरागुरु for कर्पूरागरु. 2302 1. BD. वालुकौ for वालुका. 2303. 1. C. समे इमे, D. उभे समे for समे उभे. 2305. 1. BCD. तक्कोलं for तक्कोल; 2. C. भासित for भावित. 2309. 1. A. धूमकः for धूपकः. 2316. 1. BD. शिखण्डं for शिखासु.

आवेष्ट्यारोप्यविक्षेप्यबन्धनीयैश्चतुर्विधम् ।
कोटीरो ना किरीटोऽस्त्री मौलिर्ना मकुटं न ना ।
कर्णिका कुण्डलं तालपत्रं[1]ताटङ्कमस्त्रियाम् ।
हारो मुक्तावली मुक्तासारो मौक्तिकदाम च ।
गोस्तनस्तु चतुष्षष्टियष्टिः[1] स्याच्छतयष्टिकः[2] ।
देवच्छन्दो माणवको यः स षोडशयस्टिकः ।
स्याद्यष्टिभिर्द्वादशभिर[1]र्धमाणवकः स्मृतः ।
एकावल्येकयष्टिः स्याद् द्वात्रिंशदङ्गुलायता ।
अथ नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिका ।
तरलो नायकश्चोभौ हारमध्यस्थिते मणौ[1] ।
ग्रैवेयं कण्ठभूषाथ लम्बनं तु ललन्तिका[1] ।
पत(द?)कः[1] पुंस्युरोभूषा [2]वस्त्रबन्धादयो भिदाः ।
चालपाश्या पारितथ्या पत्रपाश्या ललाटिका ।
समे त्वङ्गदकेयूरे वलयं कटकोऽस्त्रियाम् ।
कङ्कणं[1] करभूषा स्यादङ्गुलीयकमूर्मिका ।
कलापो मेखला काञ्ची रशना सप्तकीति च ।
क्लीबे सारसनं क्षुद्रघण्टिका किङ्किणी समे ।
नूपुरोऽस्त्री तुलाकोटिर्मञ्जीरो हंसकः समाः ।

---

2321. 1. A. ताडङ्कम् for ताटङ्कम्. 2323. 1. ABD. चतुष्षष्टिः for चतुष्षष्ट; 2 C. यष्टका for यष्टिकः. 2325. 1. C. अद्ध for अर्द्ध. 2328. 1. C. deletes ll. 2328—2335. 2329. 1. A. तूललम्बिका for तु ललन्तिका. 2330. 1. A. पुत्रकः, B. पतकः, D. पतगः for पदकः; 2. ABD. वस्त, B. Supra line वस्त्र for वस्त्र. 2333. 1. B. om. l. 2333.

आवापकः ¹पारिहार्यमुभयं कटकान्तरे ।

इति * वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
मनुष्याध्यायोऽष्टादशः ॥

——:※:——

# १९

## ब्रह्माध्यायः

अन्ववायोऽन्वयो वंशः संतानोऽभिजनः कुलम् ।
गोत्रं च संततिर्जात्यः कुलीनश्च महाकुलः ।
चातुर्वर्ण्यं तु चत्वारो वर्णास्ते ब्राह्मणादयः ।
ब्राह्मणो बाडवो विप्रः षट्कर्मा भूसुरो द्विजः ।
ब्रह्माग्रजन्मा यज्ञस्तु सप्ततन्तुः सवः क्रतुः ।
हवो¹ऽध्वरो मखो यागो वितानं सवनं समे ।
इज्येष्टि¹र्यज्ञकर्मेष्टं पूर्तं खातादिकर्मणि ।
यज्ञशीलो यायजूको यज्वा स्यादासुतीवलः ।
सोमयाजी क्रतौ यष्टा यजमानश्च दीक्षितः ।
सोमपाः सोमपीथी स्याच्चितवानग्निमग्निचित् ।
अग्न्याहितस्त्वाहिताग्निः पत्नी यज्ञसधर्मिणी ।
सर्ववेदास्तु सर्वस्वदक्षिणं यागमिष्टवान् ।
बृहस्पतिसवेनेष्टं येन स स्थपतिः स्मृतः ।

---

2337. I. B. परी for पारि. ※ BD. om. वत्सकुलवामनभट्टबाण-विरचिते. 2343. I. A. हव्यो° for हवो°. 2344. I. D. इज्येष्टी for इज्येष्टिः.

सान्नाय्यं तु हविर्हव्यं हुतं त्रिषु वषट्कृतम् ।
पात्राणि स्युः स्रुवो यज्ञे स्रुग्जुहूरुपभृद्ध्रुवा ।
शम्याग्निहोत्रहवनी[1] दृषच्छूर्पमुलूखलम्
कपालमुसलौ कृष्णाजिनं स्फ्य उपला स्त्रियाम् ।
दश यज्ञायुधान्येतान्यथ स्युर्वाच्यलिङ्गकाः ।
अपोनप्त्र्यमरुत्वत्यवास्तोष्पत्याग्निमारुताः ।
द्यावापृथिव्यवायव्यकायपित्र्याग्निवारुणाः ।
अग्निषोम्यसुनासीर्यशुक्रीयाग्नेयसौम्यकाः ।
ऋतव्यौषध्यमाहेन्द्रगृहमेध्याश्विना इमे ।
एकोनविंशतिः सास्य देवतेत्यर्थवाचकाः ।
कुम्भस्थं मन्त्रपूतं यज्जलं सा वसतीवरी ।
रशना स्याद्दर्भमयी रज्जुर्यूपाङ्गवेष्टनी ।
चषालो यूपकटको यूपाग्रं तर्म न द्वयोः
आज्यं तु दधिसंमिश्रं पृषदाज्यमथ द्वयोः ।
अरणिर्मन्थदारुः स्यादामिक्षा दधियोगतः ।
शृतोष्णे[1] क्षीर आस्तावः संस्तावो यत्र सामिनः ।
स्तुवन्त्यग्निष्ठमग्नेर्यत् स्थितं यूपादि संमुखे ।
प्रायणीयोदयनीये त्रिष्वाद्येऽन्त्ये च कर्मणि ।
सा सामिधेनी धाय्या च ऋगग्नेर्या समिन्धने ।
चरुर्ना हविषः पाके प्रणयस्त्वग्निसंस्क्रिया ।

---

2353. 1. A. हवणी for हवनी. 2366. 1. A. शृतोष्ण for शृतोष्णे.

स्त्रियां कृष्णविषाणा सा या कण्डूव्यपनोदिनी ।
शस्त्रं स्तोत्रं ऋचां साम्नां शंसनं स्तवनं क्रमात् ॥
व्रीहिश्यामाकगोधूमयवमुद्गतिलाणवः ॥
माषप्रियङ्गुनीवारकोरदूषमसूरकाः ॥
गवीधुका कुलित्थश्च[1] यज्ञीयास्ते चतुर्दश ।
दीक्षान्तोऽवभृथो यज्ञकर्मार्हं यज्ञियं त्रिषु ।
भूमिः परिष्कृता वेदिः प्राग्वंशः प्राग्घविर्गृहात् ।
परंपराकं शसनं प्रोक्षणं च पशोर्वधे ।
घर्मः प्रवर्ग्यश्चत्वालो वेदिमृत्खननावटः[1] ।
महावीरः पात्रभेदे होमधेनुररुन्धती ।
दर्भैरग्निपरिस्तारः परिधिर्होम आहुतिः ।
चमूः स्त्री चर्म सुत्यार्थं [1]कुम्बा सुगहना वृतिः ।
पशुबन्धास्तु पशवः स्थण्डिलं चत्वरं समे ।
स्युर्ब्रह्माध्वर्युरुद्गाता होता चामी महर्त्विजः ।
ऋत्विजो याजकाश्चाथ[1] नियमो व्रतमस्त्रियाम् ।
उपवासस्त्वौपवस्त्रं ब्रह्मयज्ञादयस्तु ये ।
एते पञ्च महायज्ञाः स्वाध्यायस्तु जपः श्रुतेः ।
वृत्ताध्ययनवान् ब्रह्मव[1]र्चसी सत्यवाक् शुचिः ।
ऋषिस्त्रिकालसंदर्शी मुनिर्वाचंयमो व्रते ।

---

2375. I. B. गवीतुका कुलस्थश्च for 2375a. 2379. I. B. मृद्बन्धनावटः for मृत्खननावटः. 2382. I. A. कुम्भा for कुम्बा. 2385. I. A. यायजूकाश्च for याजकाश्चाथ. 2388. I. A. ब्रह्मवर्चनः for ब्रह्मवर्चसी.

स्यात् कृताभिषवः सुत्वा श्रोत्रियच्छान्दसौ समौ ।
अध्यापक उपाध्याय आचार्यो देशिको गुरुः ।
स्युर्दक्षणीयदक्षिण्यदक्षिणार्हास्त्रयस्त्रिषु ।
ब्रह्मचारी व्रती वर्णी स्नातकश्चाप्लुतः समौ ।
स्यातां क्रतौ कुण्डपाय्यसंचाय्यावथ पावके ।
परिचाय्योपचाय्यौ च समूह्यश्च प्रयोगिणः ।
आश्रमा ब्रह्मचर्याद्या व्रतार्थं स्थण्डिलेशयः ।
स्यात् स्थाण्डिलोऽथ विरजस्तमसः स्युर्द्वयातिगाः ।
स्यात् सुत्याभिषवो दर्शपूर्णमासौ क्रतौ पृथक् ।
पक्षान्तयोरनूचानः साङ्गाधीतश्रुतिर्गुरोः ।
सर्वांहश्छेदि[1] यज्ञण्यं त्रिषु स्यादघमर्षणम् ।
अभाषणं तु मौनं स्यात् कुण्डं त्वनल[1]गर्तके ।
हवित्री[1] हवने च द्वे तत्रैव परिवर्तुले ।
त्रिकूटं तु त्रिकोणेऽ[1]स्मिन् संप्रदायो गुरुक्रमः ।
संप्रदायादविच्छिन्नं पारंपर्योपदेशनम् ।
ऐतिह्यमितिहालिङ्गे व्रतिनामासनं बृसी ।
व्यजनं तद्धवित्रं स्या[1]द्यत् कृतं मृगचर्मणा ।
परिपाटिः स्त्रियामावृदानुपूर्व्यनुपात्ययः ।

---

2400. 1. B. सर्वांहारिच्छद्धि for सर्वांहश्छेदि. 2401. 1. BD. °वर्तके for गर्तके. 2402. 1. A. om. l. 2402; BD. हविः स्त्री for हवित्री. 2403. 1. B. स्यादसंयोगः, D. स्यादंसयोगः for (अ) स्मिन् संप्रदायः. 2406. 1. B. स्यात् स्यात् कृतं for स्याद्यत् कृतं.

अनुक्रमश्च पर्यायः स्यात् पर्यय उपात्ययः।
निपाठो निपठः पाठः पठनाध्ययने समे ।
अधीयानोपकुर्वाणगायत्रास्तु समास्त्रयः ।
संसारमुक्तिः प्रव्रज्या निर्जितात्मा यतिर्यती ।
पाराशरी तु कर्मन्दी परिव्राण्मस्करी च सः ।
वैखानसो वनेवासी वानप्रस्थश्च तापसः ।
चतुर्थकालभुग्भिक्षुर्वृष्णि[1]रष्टमकालभुक् ।
वर्षवातातपक्लेशसहनोऽभ्रावकाशिकः ।
ब्राह्मणस्तु पदैकेन व्रते [1]तिष्ठञ्शिवव्रती ।
रुद्रव्रती क्षत्रियश्चेद्वाताहारस्त्वहिव्रती ।
मत्स्यव्रती जले तिष्ठंस्तृणशय्यस्तु वर्णशः[1] ।
भूमौ विपरिवृत्यास्ते यः स पातालमूलिकः ।
छात्रान्तेवासिनौ शिष्ये शैक्षाः प्राथमकल्पिकाः ।
एकब्रह्मव्रता एते मिथः सब्रह्मचारिणः ।
सतीर्थ्यास्ते स्युरेकस्माद्गुरोर्विद्यास्वधीतिनः ।
पतितः सत्पथाद्भ्रष्टो ब्रह्मबन्धुर्द्विजाधमः ।
जातिमात्रोपजीवो यः स एव ब्राह्मणब्रुवः ।
अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च यः एव बकव्रती ।
डाम्भिकश्छाद्मिको लुब्धो हिंस्रः सर्वार्थवञ्चकः ।

---

2414. 1. A. वृष्णीः, D. वृष्टिः for वृष्णिः. 2416. 1. AD. तिष्ठं शिव°, for तिष्ठञ्शिव°. 2418. 1. D. पर्णशः for वर्णशः.

धर्मध्वजी स्वार्थपरः स्याद् बिडालव्रती द्विजः ।
प्रच्छन्नं पातकं कुर्वन् व्रतचर्याभिरात्मनः ।
यः कुक्कुटव्रती स स्यादस्वाध्यायो[1] निराकृतिः ।
संस्कारव[1]र्जितो व्रात्यः प्रणष्टाग्निस्तु वीरहा ।
कन्याया दृष्टपुष्पाया विवोढा वृषलीपतिः ।
स वीरो[1]ज्झोऽग्निहोत्राग्नौ वत्सरं न जुहोति यः ।
अग्निहोत्रच्छ[1]लाद्यश्च परो वीरोपजीवकः ।
वीरविस्रावको जुह्वद्यः शूद्रोपार्जितैर्धनैः ।
वेदोज्झो वेदविस्मृत्या स नग्नो यो निरग्निकः ।
पर्याधाता कृताधानो योऽग्रजन्मन्यनग्निके ।
पर्याहितः स्यात् स [1]ज्यायानयज्व[2]न्यग्रजेऽनुजः ।
परियष्टा[1] सोमयाजी स[2] तु ज्यायान् परीष्टकः ।
यज्ञत्यागी वृथाजातोऽपञ्चयज्ञो मलिम्लुचः ।
परिवेत्ताग्र[1]जेऽनूढे कनिष्ठो दारसंग्रही ।
परिवित्तिस्तु तज्ज्यायान् परिवित्तः [1]कुरी च सः ।
पुनर्भूः पुनरूढा स्यादूर्मिला त्यक्तभर्तृका ।
अग्रजायामनूढायामूढा भर्तुः परेयुषः ।

---

2430. 1. B. अस्वाध्यायी for अस्वध्यायः. 2431. BD. वर्जिता व्रात्याः for वर्जितो व्रात्यः. 2433. 1. A. वीरोजेझ्झा°, B. वीरेज्यो°, C. वीरोजो° for वीरोज्झो°. 2434. 1. A. छलाद्याज्ञा, B छलाद्याशा for छलाद्यश्च. 2438. 1. A. ज्याश्च for ज्यायान्; 2. BD. अयज्वन्नग्रजे for अयज्वन्यग्रजे. 2439. 1. BD. पर्यष्टा for परियष्टा; 2. B. यस्तु for स तु. 2441. 1. A. अग्रजे नोढे for अग्रजेऽनूढे. 2442. 1. A. परिविक्तिकुरी for परिवित्तः कुरी.

कनिष्ठगा[1] द्विरूढा च दिधिषूः पतयः क्रमात् ।
तासां दिधिष्वग्रदिधिष्वग्रेदिधिषवस्त्रयः ।
यस्मिन्नुदेति सुप्तेऽर्को यस्मिन् सुप्तेऽस्तमेति च ।
तौ द्वौ स्यातामभ्युदिताभिनिर्मुक्तौ यथाक्रमम् ।
गुरुदाराभिगामी तु योऽसौ स्याद्गौरु[1]दारिकः ।
परदारंगमी[1] पारदारिकः पारतल्पिकः ।
शिक्षा तु विद्योपादानं संस्काराद्ग्रहणं श्रुतेः ।
उपाकरणमाम्नायो गुणो गुणनिका स्त्रियाम् ।
दण्डः पालश आषाढो व्रते राम्भस्तु वैणवः ।
स्यात्तु सारस्वतो बैल्व औदुम्बर उलूखलः ।
मौञ्जी तु मेखला सा तु मौर्वी स्यादेकमेखला ।
छन्दांसि गयत्र्यादीनि कुण्डी त्वस्त्री कमण्डलुः ।
ज्ञानमाद्यमुपज्ञा स्यात् परमान्नं तु पायसम् ।
हव्यकव्ये दैवपित्र्ये अन्ने दान्तस्तपःक्षमः ।
भैक्षं भिक्षासमूहे स्यात् समौ भिक्षाकभिक्षुकौ ।
गोष्ठी समज्या परिषत् सभासमितिसंसदः ।
स्त्रियां वा स्थानसदसी सदस्या विधिदर्शिनः ।
ते तु सभ्याः सभास्तारा अमृतं यज्ञशेषके ।
चौलं तु भद्राकरणं वपनं परिवापणम् ।
चौरं तत् सशिखं तोधं[1] निःशिखं भिक्षुलोचकम् ।

---

2445. 1. AD. कनिष्ठिका for कनिष्ठगा. 2449. 1. A. गुरुतल्पकः, for गौरुदारिकः. 2450. 1. B. दारगामी, D. दारगमी for दारंगमी. 2464. 1. A. तोसं for तोधं.

शिखावानवचूडः[1] स्यात् पञ्चचूडस्तु सारणः ।
अशिखो मुण्डितो मुण्डः पौंस्नपुंसवने समे ।
विवाहोपयमोद्वाहोपयामा दारसंग्रहः
पाणिग्रहः परिणयो निवेशः पाणिपीडनम् ।
तत्प्रभेदास्त्वमी ब्राह्मप्राजापत्यार्षकासुराः ।
अपि गान्धर्वपैशाचराक्षसा अथ कौतुकम् ।
हस्तसूत्रं प्रतिसरो दायो हरणयौतके[1] ।
विगतान्यानुरक्ता स्यान्नष्टा तु स्पृष्टमैथुना ।
स्विद्यत्पाणिपदा [1]वर्षकारी कुब्जा तु कारिका ॥
कारीकन्या प्रसूजाता[1] नतजानुस्तु सिंहिका ।
विस्तीर्णजानुर्विकटा हरिता पतितात्मजा ।
अथा[1]जीवदपत्यायाः मातुः कन्यो विदूषिता ।
सांकारिका बन्धुकुले गरपावकदायिनी ।
स्रोता पिङ्गलदक्केशा स्वल्पदेहा मस्रषिका ।
शरभा तु विशीर्णाङ्गी राता [1]विहृतिचञ्चला ।
अरणिस्तु स्पृहापाली[1] वृषभा वृषलक्षणा ।
कोहरा मुखरा पाली जडा गुप्ता तिरो[1]हिता ।

---

2465. 1. B. शिखावान्नवचूडः for शिखावानव°. 2471. 1. BD. यौतकौ for यौतके. 2473. 1. B. वर्ष्म for वर्ष. 2474. 1. A. जारिकः स्यात् प्रसूजाता for 2474a. 2476. 1. A reads l. 2476 as:—अथ जीवद्पत्यायाः या तु कन्यापि दूषिका ।. 2479. 1. after राता वि— D adds: सर्वाङ्गतैषिभः from. l. 2485b and also deletes ll. 2479–2485. 2480. 1. A. अरणिस्त्वस्पृहा पाली for 2480a. 2481. 1. A तु रोहिता for तिरोहिता.

खण्डना तु पतिघ्नी स्यात् पृषता श्वेतबिन्दुका ।
धृष्टा प्रवाणिका व्यङ्गा[1] निकृष्टा कुत्सिताहिता[2] ।
नाम्नैव [1]दूषिता हारी [2]मित्रा सर्वानुकूल्यभाक् ।
विकृताद्या(विगताद्या?)स्तु नोद्वाह्याः कन्याः सद्भिर्हितैषिभिः ॥
यष्टिर्द्वयोः स्त्रियां मीना खनित्री तु विशाखिका ।
बद्धदर्भा देवयष्टिश्चर्या त्वीर्यापथे स्थितिः ।
व्रज्याटाट्याटनं क्लीबे त्वक्षरं वर्णमस्त्रियाम् ।
स्पर्शाः स्युः काद्यः पञ्चविंशतिर्मावसानकाः ।
स्त्रियोऽन्तस्था यरलवास्त्रिलिङ्गस्त्वनुनासिकः ॥
स्युरूष्माणः [1]शषसहा रेफो रः स्युरचः स्वराः ।
मुखे शोभा श्रुतेः पाठे [1]शाली चित्रायनीति च ।
ब्रह्माञ्जलिः स्वञ्जलिः स्याद्विप्रुषो ब्रह्मबिन्दवः ।
कल्पो विधिः क्रमो मुख्यः प्रथमः कल्प इत्ययम् ।
अनुकल्पस्तदधमः पूजा [1]त्वर्चार्हणार्चना ।
समा नमस्यापचितिः सपर्या[1] च पुरस्क्रिया ।
महोऽञ्चनमुपास्तिस्तु भक्तिः सेवा समाश्रयः ।
आप्लाव आप्लवः स्नानमवगाहनमज्जने ।
मानसाग्नेयवायव्यब्राह्मवारुणपार्थिवम् ।

---

2483. 1. A. प्रपाणिका व्यङ्गा, B. प्रावाणिकाव्यङ्गा for प्रवाणिका व्यङ्गा; 2. B. °हता for °हिता. 2484. 1. A. रूषिता for दूषिता; 2. A. स्मित्रा D. ग्लत्रा for मित्रा. 2491. 1. A. सषशाह्वाः for शषसहाः. 2492. 1. A. शारी, BD. शालि for शाली. 2495. 1. D. त्वर्हार्हणा° for त्वर्चार्हणा°. 2496. 1. D. सपर्यार्चा for सपर्या च.

दिव्यं च कापिलं चेति स्नानभेदाः स्युरष्टधा ।
वितीर्णिरंहतिस्त्यागोऽतिसर्गः[1] प्रतिपादनम् ।
उत्सर्जनं वितरणं विश्राणनविसर्जने[1] ।
अपवर्जनदाने च स्पर्शनं च प्रदेशनम् ।
मृतस्नानमपस्नानं त्रिषु स्यादौर्ध्वदेहिकम्[1] ।
मृतार्थं तदहर्दानं श्राद्धं तत्कर्म मन्त्रवत् ।
निवापः पितृदानं स्यादन्वाहार्यं तु मासिकम् ।
मूले कनिष्ठयोर्मध्ये तर्जन्यङ्गुष्ठयोरधः ।
अङ्गुष्ठस्य कराग्रे च तीर्थानि स्युर्यथाक्रमम् ।
प्रजापतिपितृब्रह्मदेवानामथ न द्वयोः ।
उपवीतं ब्रह्मसूत्रं प्रोद्धृते[1] दक्षिणे करे ।
प्राचीनावीतमन्यस्मिन् निवीतं कण्ठलम्बितम् ।
अध्येषणार्थना याच्ञाभिशस्तिः सनिरर्दनम् ।
भिक्षा च याचना शंसा शासनं विचयो मृगः ।
मार्गः परीष्टिरन्विष्टं मृगणान्वेषणा तथा ।
पर्येषणा चान्वीक्षा च पाद्यं पादाय वारि यत् ।
अतिथ्यर्थं यदातिथ्यमातिथेयोऽत्र साधुनि ।
त्रिष्वथातिथिरागन्तुः सर्वातिथ्यं करोति यः ।
स तु सर्वातिथिः पादग्रहणं त्वभिवादनम् ।
उपस्पर्शस्त्वाचमनमपचारस्त्वपक्रिया ।

2501. 1. AC. निसर्गः for अतिसर्गः. 2502. 1. A. विवर्जने for विसर्जने. 2504. 1. D. दैहिकम् for देहिकम्. 2510. BD. प्रोद्धृतं for प्रोद्धृते.

हिंसाकर्माभिचारः स्यादासनं स्वस्तिकादिकम् ।
कार्तान्तिकमौहूर्तिकमौहूर्तज्ञानिगणक[1]दैवज्ञाः ।
सांवत्सरमौहूर्तौ ज्योतिषिकोऽर्थवति गणितसंख्याते ।
विंशत्याद्यास्त्वा नवतेः स्त्रियामेकवचस्यमूः ।
एकस्मादापरार्धं स्यात् स्थानं दशगुणं यथा[1] ।
एकः[1] पङ्क्तिर्दश शतं सहस्रमयुतं [2]तथा ।
नियुतं प्रयुतं कोटिरर्बुदं न्यर्बुदाब्जके ।
खर्वो निखर्वः शङ्खश्च पद्मं ना तु समुद्रकः ।
मध्यमन्तं परार्धं च पदानि गणनाविधौ ।
एवमष्टादशैतानि संख्या तु गणना समे ।
अक्षरचुञ्चुं लिपिकरमक्षरचणमपि तमक्षराधिकृतम् ।
लेखकमाहुः स्त्री लिपिरपि लिबिरालिखितवर्णविन्यासे ।
त्रिभिर्धर्मार्थकामैः स्यात् त्रिवर्गस्तैः समोक्षकैः ।
चतुर्वर्गोऽथ [1]सबलैस्तैश्चतुर्भद्रमित्यपि ।

इति *वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
ब्रह्माध्याय एकोनविंशतिः ॥



2521. 1. A. गणिक for गणक. 2524. 1. A. यदा, B. तथा for यथा. 2525. 1. A. एकं, D. एका for एकः; 2. A. ततः for तथा. 2533. 1. BD. सबद्धैः for सबलैः. * BD. om. वत्सकुलवामन-भट्टबाणबिरचिते.

# २०

## क्षत्रियाध्यायः

मूर्धाभिषिक्तबाहुजराजन्यक्षत्रियविराजः ।
क्षत्रमथ राण्महीभृत्पार्थिवनृपराजभूपनरदेवाः ।
महीक्षिदथ राजन्यराजसंघे यथाक्रमम् ।
राजन्यकं राजकं च सुराजा राज्ञि सत्तमे ।
चक्रवर्ती सार्वभौमो यः सर्वपृथिवीश्वरः ।
राजसूयेन येनेष्टं शास्ति राज्ञो य आज्ञया ।
मण्डलाधीश्वरो यश्च स सम्राण्मध्यमश्च सः ।
अधीश्वरो नताशेषसामन्तो नाभिरित्यपि ।
मन्त्री तु सचिवोऽमात्यः पुरोधाः स्यात् पुरोहितः ।
प्रधानानि महामात्रा बलं मौलादिषड्विधम् ।
ते मौलभृतकश्रेणी[1]सुहृदाटविकद्विषः ।
राज्याङ्गानि तु पौराणां श्रेण्यः प्रकृतयस्तथा ।
स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ।
षाड्गुण्यं षड्गुणाः संधिर्विग्रहो[1] यानमासनम् ।
द्वैधं समाश्रयस्तिस्रः प्रभावोत्साहमन्त्रजाः ।
शक्तयोऽथ क्षयः स्थानं वृद्धिरेष त्रिवर्गकः ।
सेतु[1]र्दुर्गं वनादानं खनिक्षेत्रं वणिक्पथः[2] ।

---

2544. 1. श्रेणि for श्रेणी. 2547. 1. D. संधिविग्रहौ for संधिर्विग्रहः.
2550. 1. A. सेतु for सेतुः; 2. B. पथम् for पथः.

गजबन्धः कृषिः शून्यदेशानां च निवेशनम् ।
अष्टवर्गोऽथ धर्माद्यैरुपधा स्यात् परीक्षणम् ।
अथोपायाः सामदानभेददण्डाश्चतुष्टये ।
उपजापस्तु भेदः स्यात् समाने सामसान्त्वने ।
तन्त्रं स्वराष्ट्रचिन्ता स्यादावापः परिचिन्तनम् ।
स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यार्थदूषणे ।
दण्डपारुष्यमित्येतन्महाव्यसनसप्तकम् ।
स तु त्रिष्वडक्षीणो यस्तृतीयाद्यगोचरः[1] ।
प्रतापश्च प्रभावश्च तेजो यत् कोशदण्डजम् ।
राज्यस्याचिरलब्धस्य शमनं परिपन्थिनाम्[1] ।
रञ्जनाप्रतिकाराभ्यां लब्धप्रशमनं विदुः ।
समौ विश्वासविश्रम्भावुपेक्षा त्ववधीरणा[1] ।
मर्यादाधारणासंस्थाव्यवस्थास्थितयः समाः ।
निदेशः शासनं शिष्टिराज्ञाशास्तिनियुक्तयः ।
कामक्रोधौ लोभमोहौ मदो मत्सर इत्यमी ।
षट् शरीरान्तररयः शत्रुर्द्वेषणदुर्हृदौ ।
परिपन्थिसपत्नपरासुहृदः प्रतिपक्षविपक्षविरोधभृतः ।
विमताहितशात्रववैरिरिपुद्विषतो द्विडरात्यभिघात्यरयः ।
प्रत्यनीकप्रतिद्वन्द्विप्रत्यवस्थातृदस्यवः ।
द्वेष्यानिष्टप्रतिस्पर्धिप्रत्यवस्कन्दिनोऽपि च ।

2558. 1. BD. गायकः for गोचरः. 2560. 1. A. om. ll. 2560 & 2561. 2562. 1. BD. सीरणा for धीरणा.

मित्रं सखा सुहृत् स्निग्धो वयस्यः सवया अपि ।
अनुरोधोऽनुवृत्तिः स्यादनुसारोऽनुकूलनम् ।
सख्यं साप्तपदीनं स्यान्मैत्री मैत्रं च सौहृदम् ।
अपसर्पश्चरश्चारः प्रणिधिर्गूढपूरुषः ।
स्पशो यथार्हवर्णश्च दूतवार्ताहरौ समौ ।
संदेशहारी[1] दौत्यं [2]तु दूतानां भावकर्मणोः ।
ते पञ्चधा वणिग्भिक्षुच्छात्रलिङ्गिकृषीवलाः ।
आगोऽपराध उद्दानं बन्धनं दण्डनं दमः ।
द्विपाद्यो द्विगुणो दण्डः शुल्को घट्टादिदेयके ।
बलिः करो भागधेय उपदा स्यादुपायनम् ।
उपग्राह्यं प्राभृतं तदुपहारोऽथ शम्बलः ।
पाथेयमधिकारस्तु[1] प्रक्रिया ककुदोऽस्त्रियाम् ।
राजचिह्नं नृपच्छत्रमातपत्रं हिरण्मयम् ।
प्रकीर्णकं चामरं स्याद्राज्ञां सिंहासनं तु यत् ।
भद्रासनं भद्रपीठं पीठं कोशोऽर्थसंचयः ।
लक्ष्मीश्रीसंपदस्तुल्या विपत्तिविपदापदः
धान्यादेर्वीवधः[1] प्राप्तिरायातिस्तु[2] धनागमः ।
आयतिस्तूत्तरे काले उदर्कस्तूत्तरं फलम् ।
क्लीबे तदात्वं तत्कालः स्वपक्षप्रभवं भयम् ।

---

2576. 1. A. om. l. 2576; 2. B. तद् दूतानां for तु दूतानां. 2582. 1. A. अतिकारस्तु for अधिकारस्तु. 2587. 1. BD. धान्या दर्वीवध-प्राप्तिः for 2587a; 2. ABD. आयतिस्तु for आयातिस्तु.

राज्ञामहिभयं [1]व्याधिर्दुर्भिक्षमशनिः शिखी ।
मकरश्च भयं दैवं भूतान्यर्कः शशी यमः ।
मनो रात्रिर्दिनं संध्ये धर्मश्चैते चतुर्दश ।
साक्षिणोऽधिकृतोऽध्यक्षो हेमाध्यक्षस्तु भौरिकः ।
रूप्याध्यक्षो नैष्किकः स्यात् षण्डवर्षवरौ समौ ।
अन्तःपूरे योऽधिकृतः स्यादन्तर्वंशिकश्च सः ।
सामन्तराज्यसंधिस्था आरक्षाः पुररक्षकाः[1] ।
वैहासिकः केलिकिलो वासन्तिकविदूषकौ ।
कार्मिकोऽधिकृतः शुल्के गोपो ग्रामेषु भूरिषु ।
स्थायुको[1]ऽधिकृतो ग्रामे स्थाने तु स्थानिकोऽप्यसौ ।
क्षुद्रोपकरणेषु स्यादध्यक्षः पारिकार्मिकः ।
धर्मी तु धार्मिकोऽध्यक्ष उभावायोदयौ समौ ।
द्वारपालः प्रतीहारो द्वास्थो[1] दण्डी च वेत्रभृत् ।
स्थापत्याः सौविदाः सौविदल्लाः कञ्चुकिनः समाः ।
तलकाराः पुरीवृत्तशोधकाः दण्डपाशिकाः ।
दुर्गं पञ्चविधं वानपार्वतैरिणमारवम् ।
जालं चेति समार्थं स्यादजयं संगतं द्वयम् ।
अरिमित्र[1]मरेर्मित्रं[2] मित्रामित्रमतः[3] परम् ।

---

2590. I. BD. व्यासिः for व्याधिः. 2596. I. A. पुररक्षिकाः for पुररक्षकाः. 2599 I. BD. स्थायिको° for स्थायुको°. 2602. I. A. द्वास्थे for द्वास्थः. 2607. I. D. अरिर्मित्रम् for अरिमित्रम्; 2. A. मित्र for मित्रं; 3. D. मित्रमित्रम् for मित्रामित्रम्.

तथारिमित्रं(त्र ?)मित्रं च विजिगीषोः परे नृपाः[1] ।
यातव्यस्त्वभिगन्तव्यः पार्ष्णिग्राहस्तु पृष्ठतः[1] ।
पृथ्वीवरो[1]ऽन्तदृक् स्थेयो न्यायदर्शी च धार्मिकः ।
मागधो मगधो बन्दी मधुकः स्तुतिपाठकः ।
वैतालिको बोधकरो घाटिकश्चाक्रिकश्च सः ।
पादुका कण्टकीगर्तः[1] पांसुच्छन्नो महापथे ।
तालयन्त्रं क्षुराकारं यदि वा क्रकचोपमम् ।
शरभाभा जानुदात्री[1] दारुजा [2]जानुभञ्जनी ।
स्यात् कण्टकप्रतिसरा रज्जुः कण्टकसंचिता ।
अहिपृष्ठं[1] तु निर्मांसपृष्ठास्थ्याभमयोमयम् ।
उपस्कारः प्रस्खलनी भूमिस्था पुटपिच्छला[1] ।
श्वदंष्ट्रार्गलशृङ्गाटमण्डूकाद्यन्वितार्थकम् ।
लभ्यमौपयिकं न्याय्यं भजमानाभिनीतवत् ।
युक्तं च विजनच्छन्ननिःशलाके विविक्तवत् ।
रहश्चोपह्वरं क्लीबे उपांशु च रहोऽव्ययम् ।
वित्तत्यागो[1] व्ययः संप्रधारणं स्यात् समर्थनम् ।
स्रंसनं ध्वंसनं भ्रंशो भ्रेषोऽधःपतनं स्थितेः ।
अनीकस्थो रक्षिवर्गोऽनुजीवी सेवकः समौ ।

2608. 1. A पुरो for परे. 2609. 1. A. °स्तुतिपाठकः, D. °स्तुतिवाचकः for °स्तु पृष्ठतः. 2610. 1. BD. om. ll. 2610 & 2611. 2613. 1. B. गर्तं पांसुच्छन्ने for गर्तः पांसुच्छन्नः. 2615. 1. D धात्री for दात्री; 2. D. दारु for जानु. 2617. 1. A. अभिवृष्टं for अहिपृष्टं. 2618. 1 A. पुच्छिला for पिच्छिला. 2623. 1. B. वित्तात्ययः for वित्तत्यागः.

साम सान्त्वं बलात्कारः प्रसभो[1] हठ[2] इत्यपि ।
आयुक्तिविनियुक्ता या सा ताम्बूलकरङ्किका ।
अन्तःपुराङ्गनास्वन्तःपुरिका अवरोधिकाः ।
सेनाङ्गं रथहस्त्यश्वपादातं स्याच्चतुर्विधम् ।
रथनिकुरुम्बे रथ्या रथकट्या स्यन्दनः [1]शताङ्गरथौ ।
पुष्परथः क्रीडार्थः समरार्थः सांपरायिकोऽसौ स्यात् ।
देवार्थो देवरथः तार्क्ष्यः[1] पुष्परथ इत्युभौ शौरेः ।
कर्णीरथः प्रवहणं डयने भेदे तु [1]गोमुखप्रमुखाः ।
चक्रं रथाङ्गमस्य प्रान्ते नेमिः स्त्रियां प्रधिः पुंसि ।
अक्षस्तु चक्रधारकदारुणि रथमध्य एव रथनीडः ।
स्त्रीपुंसोरणिराणी[1] स्यातामक्षाग्रकील एवोभौ[2] ।
शकटमनः शकटिः स्यात् कम्बलिवाह्यं तु गन्त्री स्त्री ।
अपस्करो रथाङ्गं[1] स्यात्तद्भेदे [2]गण्डकोऽस्त्रियाम् ।
प्रवाहिर्नी[1] वृत्तमध्ये रथे कूबरवर्जिते ।
वैयाघ्रो द्वैप इत्येतौ व्याघ्रचर्मावृते रथे ।
वस्त्रावृते रथे वास्त्रः काम्बलः[1] कम्बलावृते ।
पाण्डुकम्बलसंछन्नस्यन्दनः[1] पाण्डुकम्बली ।

---

2626. 1. BD. प्रसहो for प्रसभो; 2. 1. हरः for हठः. 2630 1. B. शशाङ्क for शताङ्क. 2632. 1. BD. तार्क्ष्य for तार्क्ष्यः. 2633. 1. A. गोरथ for गोमुख. 2636. 1. B. आणिः for आणी; 2. BD. कीलहि वोभौ for कील एवोभौ. 2638. 1. ABD. रथाङ्गः for रथाङ्गं; 2. A. मण्डको° for गण्डको°. 2639. 1. B. प्रवाहो ना for प्रवाहिर्नी. 2641. 1. A. काम्बलं, B. काम्बला for काम्बलः. 2642. 1. BD. स्यन्दनं for स्यन्दनः.

त्रिषु वैयाघ्रमुख्याः स्युः कूबरो ना युगंधरः ।
रथस्थं यस्तिरोधत्ते स वरूथोऽथ धूः स्त्रियाम् ।
सा स्याद्यानमुखेऽधःस्थं दारु स्यादनुकर्षकः ।
अराणि चक्रावयवाश्चक्रनाभिस्तु पिण्डिका ।
सूतस्तु सारथिर्यन्ता नियन्ता प्राजिता च सः ।
सव्येष्ठो दक्षिणस्थश्च संज्ञा रथनिवासिनाम् ।
आरा प्रवयणं तोत्रं प्राजनं तोदनं च तत् ।
परंपरावाहनं 'स्याद्यत्तद्वैनीतकोऽस्त्रियाम् ।
सर्वं तु वाहनं यानं पत्रं युग्यं च धोरणम्' ।
आन्दोलेऽन्दोलिका याप्ययानं तु शिबिका स्त्रियाम् ।
डोला प्रेङ्खोलिका प्रेङ्खा भारवाहस्तु भारिकः ।
अस्त्रं शस्त्रं प्रहरणमायुधं [1]तच्चतुष्टयम् ।
करमुक्तं [1]यन्त्रमुक्तममुक्तं मुक्तमित्यदः[2] ।
शक्त्यादि पाणिमुक्तं स्यादमुक्तं क्षुरिकादिकम् ।
मुक्तामुक्तं तु यष्ट्यादि यन्त्रमुक्तं शरादिकम् ।
अस्त्रशरासनकार्मुककोदण्डद्रोणधन्वधर्माणि ।
वा पुंसि चापधनुषी स्त्री तृणताऽस्याग्रमटनिरार्तिश्च[1] ।
कपिकेतनकोदण्डे गाण्डीवो गाण्डिवश्च वा क्लीबे ।
कर्णस्य कालपृष्ठं मिश्रकमनिलात्मसंभवस्य धनुः ।

---

2650. 1. B. स्याद्यत्तु for स्याद्यत्तत्. 2651. 1. B. om. ll. 2651 & 2652. 2654. 1. A. तच्चतुर्विधम् for तच्चतुष्टयम्. 2655. 1. D. चन्द्र for यन्त्र; 2. B. इत्यतः for इत्यदः. 2659. 1. A. अत्तिश्च, B. आर्तिश्च, D. अन्तिश्च for आर्त्निश्च.

ज्याघातवारिणी गोधा धनुर्मध्ये तु लस्तकः ।
जीवा ज्या शिञ्जिनी मौर्वी गुणः स्त्रीपुंसयोरिषुः ।
पत्रिशरविशिखसायकबाणपृषत्काशुगप्रदराः ।
काण्डखगरोपमार्गणनालीकाधोमुखकलम्बाः ।
कदम्बो[1] जिह्मगः पुङ्खी वीरशङ्कुः शिलीमुखः ।
स्नुही दलफलो भल्लः क्षुरप्रस्त्वर्धचन्द्ररुक् ।
हस्तावापः[1] शरादानं प्रमाथो लस्तकग्रहः
लक्ष्य[1]लक्षशरव्याणि निमित्तमथ कर्तरी ।
पुङ्खो लक्षो(क्षा?)ऽतिगो वेगो दीप्तिः शल्यफले समे ।
तूणीषुधिर्द्वयोस्तूण उपासङ्गः कलापकः ।
सायकाशयतूणीरनिषङ्गा अथ धन्विनाम् ।
स्थानमालीढवैशाखप्रत्यालीढादि पञ्चधा ।
यत्रांसौ विनतावुरः[1] प्रविततं[2] शिरुव्यञ्चितं मस्तकं
पादौ स्थानरतौ त्रिकं समनतं पूर्वापरौ शोभितौ ।
दृष्टिर्लक्षगता न रिक्तमुदरं पार्श्वप्रदेशादृजू
नासा सायकचुम्बिनी भवति चेत् तत् स्यात् पदं सौष्ठवम् ॥
मण्डलाग्रासिनिस्त्रिंशखड्गकौक्षेयरिष्टयः[1] ।
चन्द्रहासः कृपाणस्तु स्त्रियां च करवालवत् ।
अर्धहासोऽर्धचन्द्राङ्गो मण्डलाग्रोऽन्वितार्थकः ।

---

2666. 1. A. कादम्बः for कदम्बः. 2668. 1. B. हस्तावापस्तरादानं, D. हस्तावापसुरादनं for 2668a; 2. A. प्रमदः for प्रमाथः. 2669. 1. B. लक्षलक्ष्य for लक्ष्यलक्ष. 2674. 1 B विनता करः for विनतावुरः; 2. A. प्रविनतं for प्रवितत. 2676. BD. कष्टयः for रिष्टयः.

अम्बुनर्तस्तु[1] खड्गोऽम्बुन्यस्ततैलनिभप्रभः ।
खड्गे वराट[1] एरण्डबीजाभपुलकान्वितः ।
स्नुहीदलसदृक्छायो निस्त्रिंशोऽ[1]थावि(सि?)राजयः ।
पुलकाः पुद्गलाः शस्त्री त्वसिपुत्र्यसिधेनुका ।
क्षुरिका पुत्रिका पुत्री स्यादिली करवालिका ।
पुष्करः पुलकै रूक्षासिता दीर्घानवस्थितैः ।
कुण्डलो दीर्घनिस्त्रिंशे तरवारिः स्त्र्यसौ लघुः ।
पट्टसो दीर्घदण्डो यस्तीक्ष्णधारः क्षुरोपमः ।
कण्टकच्छेदनोऽप्येवं द्विमुखश्च भवत्यसौ ।
भिण्डिपालसृगौ तुल्यौ सर्वला तोमरोऽस्त्रियाम् ।
वराहकर्णको[1]ऽन्वर्थः कणयो लोहमात्रकः ।
प्रासः कुन्तो हाटकस्तु[1] स त्रिकण्टकसंस्थितिः[2] ।
हुलं द्विफलपत्राग्रं शङ्कुर्ना शल्यमस्त्रियाम् ।
द्रुघणो[1] मुद्गरघनौ परिघः परिघातनः ।
शतघ्नी तु चतुस्ताला लोहकण्टकसंचिता ।
अयः[1]कण्टकसंछन्ना[2] शतघ्न्येव महाशिला ।
स्थूलायःकीलसंछन्ना मुसुण्ठी[1] दारुनिर्मिता ।
दन्तत्सरू द्वौ खड्गादेर्मुष्टौ बन्धस्तु मेखला ।

---

2679. 1. A. गर्तस्तु, D. नर्दस्तु for नर्तस्तु. 2680 1. D. ऐरण्ड for एरण्ड. 2681 B. अथ for अथा. 2689. 1. B. कण्डको°, D. कण्टको° for कर्णको°. 2690. 1. A. भाट्टकस्तु for हाटकस्तु; 2. B. D. संस्थितः for संस्थितिः. 2692. 1. A. द्रुघणौ for द्रुघणः 2694. 1. A. आयः, B. अथ for अयः; 2. B. संछिन्ना for संछन्ना. 2695. 1. A. मुसुर्णी, B. मुसृण्ढी, D. मुसृणी for मुसुण्ठी.

हस्तिचारो[1] जगत्त्रासहेतुः [2]शरभसंनिभः ।
मुसलस्त्वायसो देवदण्डो रत्निप्रमाणकः ।
प्रत्याकारः परीवारः कोशोऽथास्त्रस्य शेखरः ।
उन्नयो[1] लगुडः कोणश्चक्रेयश्चक्रमित्यपि ।
स्त्रीपुंसे तु कुठारो ना [1]परशुश्च परश्वधः ।
स्वधितिः[1] शस्त्रधारायां तिस्रः पाल्यश्रिकोटयः ।
तद्दण्डलग्नशल्ये तु खेटकः [1]चीणयः क्षुरः ।
फलकोऽस्त्री फलं चर्म खेटकः क्षुद्रचर्मणि ।
मुष्टौ [1]मण्डुकसंग्राहौ [2]क्रकचः करपत्रकम् ।
तनुत्रं दंसनं वर्म तनुच्छद उरच्छदः ।
कङ्कटो [1]जरगः पुंसि संनाहः कवचोऽस्त्रियाम् ।
कवचे शस्त्रदुर्भेदे निवातकवचः स्मृतः ।
शीर्षण्यं च शिरस्त्राणं शिरस्त्रं [1]शीर्षकं च तत् ।
[1]नागोदर्युदरत्राणं जङ्घात्राणं तु[2] मत्कुणम् ।
अभ्यासस्तु श्रमो योग्या श्रमस्थानं [1]खलूरिका ।
पताका वैजयन्ती द्वे ध्वजे तद्वसनेऽपि च ।
केतुरङ्को ध्वजोऽस्त्री स्यात् केतनं चाथ कूर्चकौ ।

---

2697. 1. BD. हस्तिवासः for हस्तिचारः; 2. B. शलभ for शरभ. 2700. 1. A. उन्नेयः for उन्नयः. 2701. 1. D. परश्वश्च for परशुश्च. 2702. 1. A. स्वपितिः, श्वसितिः for स्वधितिः. 2703. 1. कणयक्षुरः for चीणयः क्षुरः. 2705. 1. A. मङ्कुक° for मण्डुक°; 2. A. क्रकवः, BD. कखलः for क्रकचः. 2707. B. जडयुः, D, जगयुः for जरगः. 2709. 1. B. गीषुकं for शीर्षकं. 2710. 1. BD. नाभो° for नागो°; 2. B. च for तु. 2711. 1. BD. खजूरिका for खलूरिका.

ऊर्ध्वाधोलम्बिनौ[1] स्यातामुच्चचूडावचूडकौ[2] ।
ध्वजिनी पृतना सेनानीकिनी वाहिनी चमूः ।
वरूथिनीतपाकिन्यावनीकं पुंनपुंसकम् ।
चक्रं सैन्यं बलं सैन्यमुखे गुल्मगुणौ समौ ।
प्रत्यासारो[1] व्यूहपार्ष्णिरासारस्तु सुहृद्बलम् ।
सेनाग्रभूमिर्नासीरः सैन्यपृष्ठे प्रतिग्रहः ।
व्यूहः स्यात् सैन्यविन्यासः स चक्रमकरादिकः ।
भटाश्चारभटा योधा योद्धारोऽथ चमूपतिः ।
सेनानीर्दण्डनाथश्च सेनारक्षास्तु सैनिकाः ।
समवेतास्तु सेनायां सैन्याः स्युः सैनिका अपि ।
बलिनस्तु सहस्रेण साहस्राश्च सहस्रिणः ।
परिधिस्थः परिचरो धट्ट[1]संनाह इत्ययम् ।
संशप्तकाः स्युः समरात् समयादनिवर्तिनः ।
पान्थाध्वनीनपथिकाध्वगाध्वन्यास्तु यात्रिकाः ।
क्ष्वेडा स्त्री[1] सिंहनादः स्यात् पादातं पत्तिसंहतिः ।
पत्तिः पदातिः [1]पदिकः पदाजिः पादातिकोऽसौ पदगश्च पद्गः ।
अभिद्विषो यानमभिक्रमः स्यात् समौ रणे भङ्गपराजयौ द्वौ ॥
अनुप्लवस्त्वनुचरः सहायोऽभिसरोऽनुगः ।
अन्वग्गा[1]म्यनुगामी च पुरोगामी पुरःसरः ।

---

2714. 1 A. लम्बिनो, BD. लम्बिनी for लम्बिनौ; 2. B. चूडका for चूडकौ. 2718. 1. A. प्रत्याहारः, B. प्रत्यासारी for प्रत्यासारः. 2725. 1. BD. धट्टः for धट्ट. 2728. 1. BD. क्ष्वेलोऽस्त्री for क्ष्वेडा स्त्री. 2729 1. D. पथिकः for पदिकः. 2732. 1. A. अन्वग्यामी for अन्वग्गामी.

पुरोगोऽग्रेसरः प्रष्ठश्चाग्रतःसर इत्यपि ।
जङ्घालः शीघ्रगामी स्याज्जङ्घाकारिकजाङ्घिकौ ।
धानुष्कास्त्रिधनुर्धरधन्विधनुष्मन्निषङ्गिणस्तुल्याः ।
काण्डीरः काण्डधरो नैस्त्रिंशिक आसिकः खड्गी ।
कृतहस्तः कृतपुङ्खः शिक्षितहस्तश्च सुप्रयोगशरः ।
प्रहित इषौ तु निरस्तो विषदिग्धे दिग्धलिप्तकौ त्रिशिखे ।
शाक्तीकः[1] शक्तिधरो याष्टीको[2] यष्टिहेतिकश्च समौ ।
चर्मिणि फलकी पारश्वधिकः परशुभृति कौन्तिकः प्रासी ।
अथ रथिनि रथिनरथिकौ केतनभृति वैजयन्तिकः कवची ।
दंसितकवचितवर्मितसज्जितसंनद्धबद्धवर्माणः ।
काण्डपृष्ठस्त्वायुधिक आयुधीयश्च शस्त्रभृत् ।
शत्रूणां तापयितरि द्विषंतपपरंतपौ ।
क्षिप्नु[1]र्निराकरिष्णुः [2]स्यादन्यत्रानभिगन्तरि ।
अभ्यमित्र्याभ्यमित्रीणाभ्यमित्रीया इति त्रयः[1] ।
स्यादूर्जस्वल ऊर्जस्वी तरस्वी बलवान् बली ।
अभिषेणयिता सैन्यैः सपत्नेष्वभियातरि ।
जिष्णुजित्वारजेतारो जयी जैत्रः समा इमे ।
शूरस्तु वीरविक्रान्तौ जितकाशी जिताहवः ।
घातकनृशंसहिंस्रव्यापादकशरारुघातुकक्रूराः ।
निस्त्रिंशोऽप्यथ साधुः संग्रामे सांयुगीनः स्यात् ।

---

2739. 1. AD. शाक्तिकः for शाक्तीकः; 2. B. याष्टिकः for याष्टीकः.

2745. 1. B. धिष्णुः for क्षिप्नुः; 2. B. स्यादमित्रा° for स्यादन्यत्रा°.

2746. 1. BD. त्रयम् for त्रयः.

सपत्राकृतनिष्पत्राकृतौ तु भृशवेधिते ।
शस्त्रक्षते तु प्रहृतः[1] स्यात् त्रिष्वनुचरादयः ।
युद्धायोधनजन्यप्रविदारणसांपरायिकमृधानि ।
कदनप्रथनक्रन्दनसंख्यसमीकानि संविदाजियुधः ।
संयत्समितौ समितिः समररणानीकमस्त्रियां त्रितयम् ।
पुंस्यभिमर्दः कलहः संग्रामो विग्रहः समाघातः ।
अभिसंपातः संगर आहव आक्रन्द आस्कन्दः ।
अभ्यागमः संप्रहारः संस्फोटः संयुगः कलिः ।
महाभीतिकरी वीराशंसनं समरक्षितिः ।
द्वन्द्वं तु बाहुयुद्धं स्यान्नियुद्धमथ पौरुषम् ।
तेजः पराक्रमः प्राणो विक्रमः शक्तिरित्यपि ।
आहोपुरुषिका सा या स्मयात् संभवनात्मनि ।
अहं पूर्वमहं पूर्वमित्यहंपूर्विकेत्यसौ ।
याहंकृतिः परस्परमहमहमिकेति सैव स्यात् ।
ऊर्जः शुष्म[1]सहो बलमोजो द्रविणं तरस्तेजः ।
सत्त्वं च प्राण ऊष्मा च शक्तिश्चाथ समार्थकाः ।
सर्वाभिसारः सर्वौघः सर्वसंनाह इत्यमी ।
राज्ञां लोहाभिसारोऽस्त्रभृतां नीराजनक्रमः ।
स्युः प्रचक्रं प्रसरणमा[1]सारश्चलितार्थके ।
संद्रावो द्रावविद्रावप्रद्रावद्रवविद्रवाः ।

---

2754. 1. A. प्रभृतः, B. प्रसृतः, D. प्रसूतः for प्रहृतः. 2767. 1. D. शुष्मः for शुष्म. 2771. 1. B. आचारआलितार्थके, D. आसार-आहितार्थके for 2771b.

अपक्रमो विनाशः स्यादपयानं पलायनम् ।
योधानां क्रन्दनं घोषः पटहाडम्बरौ समौ ।
पांसुः चोदः स्त्रियां धूली रेणुः स्त्रीपुंसयो रजः ।
चूर्णं उत्पिञ्जलोत्पिञ्जोत्पिञ्जरा भृशसंकुले ।
वैरनिर्यातनं वैरशुद्धिर्वैरप्रतिक्रिया ।
आहताच्छोटिताविद्धताडितास्फालितास्त्रिषु ।
छेदनकुट्टनलवनत्रुटनं छेदो जयो विजयः ।
भञ्जनखण्डनमोटनदानान्याच्छोद आमर्दः ।
अभ्यवस्कन्दनं चाभ्यासादनं च समे उभे ।
अपमर्दः पीडनं स्यात् करिणां घटना घटा ।
नि[1]कारणनि[2]शारणक्रथनहिंसनोज्जासन-
प्रवासनपरासनोन्मथनघातनापातनम् ।
निबर्हणनि[1]षूदन[2]क्षणनमारणालम्भन-
प्रमापणविवासन[3]व्यसन[4]पारणक्रूरणम्[5] ॥
विशरणविशसन[1]कर्षणनिर्वापणनि[2]स्तर्हणव्यथनम् ।
निर्वासनसंज्ञपने [1]निर्ग्रन्थननिसुम्भने वधः पिञ्जः ।
कृत्तमूर्ध कबन्धोऽस्त्री नृत्तयुधि कलेबरम् ।

---

2783. 1. ABD. निराकरण for निकारण°; 2. B. मारण; D. शरण for निशारण. 2784. 1. D. निष्कन्दन for निषूदन; 2. A. क्षरण for क्षणन; 3. A न्यसन for व्यसन; 4. A. वारण, BD. पारणा for पारण; 5 D. ऊरणम् for क्रूरणम्. 2785. 1. BD. क्षण for कर्षण; 2. B. निष्कर्षण for निस्तर्हण. 2786. 1. ABD. 1. निर्गन्धन for निर्ग्रन्थन.

प्रग्रहोऽपग्रहो बन्दी कारा बन्धनवेश्मनि ।
आमुक्तः' प्रतिमुक्तः संदानितपिनद्धसितबद्धाः ।
पाशितकीलितसंयतसंदितमूताश्च वाच्यलिङ्गाः स्युः ।

इति * वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
क्षत्रियाध्यायो विंशः ॥

—— :❋: ——

# २१

## वैश्याध्यायः

अर्या भूमिस्पृशो वैश्या ऊरव्या ऊरुजा विशः ।
आजीवो जीविका वृत्तिर्वार्ता वर्तनजीवने ।
वृत्तयः स्त्री कृषिः पाशुपाल्यं वाणिज्यमित्यमूः ।
उञ्छो धान्यश आदानं कणिशोपार्जनं शिलम् ।
ऋतं तदुभयं लब्धममृतं स्यादयाचनात् ।
मृतं तु याचितं कृष्यामनृतप्रमृते उभे ।
सत्यानृतं तु वाणिज्यं श्ववृत्तिः परसेवनम् ।
याचितं याच्ञया लब्धं 'निमयादापमित्यकम् ।
परिवर्तेन निर्वृत्तं वस्तु स्यादापमित्यकम् ।
पाशुपाल्यं जीववृत्तिः स्याद्दणं पर्युदञ्चनम् ।

---

2789. I. D. अमुक्तप्रतिरक्त for आमुक्तः प्रतिमुक्तः. *BD. om. वत्सकुलवामनभट्टबाणविरचिते. 2798. I. A. नियमात् for निमयात्.

तदवृद्धिकमुद्धारः कुसीदं तु सवृद्धिकम् ।
कुसीदिको वार्धुषिको [1]वृद्ध्याजीवश्च वार्धुषिः ।
कूटसाक्षी मृषासाक्षी प्रतिभूर्लग्नकौ समौ ।
अर्थिनो वचनं भाषा तत्प्रत्यर्थिन उत्तरम् ।
लेख्यो लेखः प्रत्ययस्तु दिव्यं [1]दैविकमित्यपि ।
अभियोक्ता शिरोवर्ती शिरःस्थश्चाथ दर्शितः[1] ।
अभियुक्तोऽभिशस्तः स्यादाप्तः प्रत्यायितस्त्रिषु ।
स्युः क्षेत्राजीवकृषकौ कर्षकश्च कृषीवले ।
वप्रोऽस्त्री पुंसि केदारः क्षेत्रमस्य कदम्बके ।
कैदारककैदारिककैदार्यक्षैत्रकैदारम् ।
सीत्यं[1] हल्यं कृष्टं बीजाकृतकमुप्तकृष्टं स्यात् ।
द्विगुणाकृतं द्विहल्यं द्वितीयाकृतं द्विसीत्यमेवं स्यात् ।
त्रिगुणाकृतादि सर्वं शम्बाकृतमपि च तत्तदर्थं स्यात् ।
द्रौणिको द्रोणवापः स्यात् खारीवापस्तु खारिकः ।
प्रस्थाढकादिवापाः स्युः[1] प्रास्थिकाढकिकादयः ।
मौद्गीनकौद्रवीणे भवने क्षेत्रे हि मुद्गकोद्रवयोः ।
यवयवकषष्टिकानां भवने यव्यं यवक्यषष्ठिक्ये ।
क्षेत्रे तु तिलमाषोमाभङ्गाणुभवने क्रमात् ।
तैलीनतिल्यमाषीणमाष्यौमीनोम्यवत्परम् ।
क्रमाद् व्रैहेयशालेये व्रीहिशालिसमुद्भवे ।

---

2802. 1. BD. वृद्धिजीवस्तु for वृद्ध्याजीवश्च. 2805. 1. A. देवकम्, B. दैवकम् for दैविकम्. 2806. 1. A. दर्शतः for दर्शितः. 2811. 1. B सीत्या for सीत्यं. 2815 1. B. वायास्तु for वापाः स्युः.

शाकाच्छाकटशाकीनौ चेत्राजीवादयस्त्रिषु ।
लोष्टवः पुंसि लोष्टानि कोटिशो लोष्टभञ्जनः ।
सीरगोदारणहललाङ्गलेष्वादिमं द्वयोः[1] ।
युगकीले स्त्रियां शम्या सीता तु हलपद्धतिः ।
फालो निरीषः कृषकः फलं स्यात् कूटमस्त्रियाम् ।
अभ्रिः स्त्री पुंसि कुद्दालो गोदारोऽथ प्रतोदनम् ।
प्राजनं तोत्रमाबन्धो योत्रयोक्त्रे[1] नपुंसके ।
अथ दात्रं लवित्रं स्त्री शङ्कुलास्य तु वर्तकः ।
मुष्टिः स्यात् कटकं बन्धः खनित्रमवदारणम् ।
व्रीहयः स्तम्बकरयः शालयः सिततण्डुलाः ।
रोहितो रक्तशालिः स्यात् श्वेतशालिस्तु सूकरः[1] ।
कलापकास्तु कलमा हायनास्तु महाबुसाः ।
बालकः कृष्णशालिः स्यात् प्रवरः शालिषष्टिकः ।
कलमसुगन्धिकहायनपारावतगौरलोहितपतंगाः ।
जतुमुखतूर्णकशारामुखसू[1]करषष्टि[2]कप्रवराः ।
इत्येते शालिभेदाः स्युर्नीवारो मुनिसेवितः ।
शितशूको दीर्घशूको यवो यज्ञिय इत्यपि ।
यवे तु हरिते तोक्म आशुव्रीहिस्तु पाटलः ।
व्रीहिभेदे त्वणुभंङ्गा मातुलानी उभे समे ।

---

2823. 1. A. लांगषेल्वादिमन्द्वयोः, B. लाङ्गलेषादिमद्वयोः, D. लङ्गलेष्वादिमद्वयोः for लाङ्गलेष्वादिमं द्वयोः. 2827. 1. A. तोक्त्रे for योक्त्रे. 2831. 1. BD. सूरकः for सूकरः. 2835. 1. B. शूरक, D. शूकर for सूकर; 2 B. षष्टिकप्रमुखराः, D. षष्टिकप्रमुखवराः for षष्टिकप्रवराः.

कुल्माषो यावकस्तत्र चणको हरिमन्थकः[1] ।
यवको यववर्णो[1] स्याच्छ्यामाकश्यामकौ समौ ।
चिक्कणास्त्ववतर्सा कङ्गुप्रियङ्गूमाक्षुमाः समाः ।
श्वेतकङ्गुस्तु मसुटी पीतकङ्गुस्तु मागधी ।
उदारः[1] काककङ्गुः स्त्री कोरदूषस्तु कोद्रवः ।
वरको बालनालोऽथ मङ्गल्यकमसूरकौ ।
सतीनको हरेणुः स्यात् कलायः खण्डिकश्च सः ।
माषस्तु मलदो नन्दी वृष्यो[1] बीजवरो बली ।
तिलपुष्पं वज्रपुष्पं जर्तिलोऽरण्यजस्तिलः ।
द्वौ तु वन्ध्ये तिले स्यातां पिञ्जपेजौ तिलात् परौ ।
मुद्गो[1] बलाङ्गः पीतेऽस्मिन् वसुखण्डीरशारदाः ।
चणको हरिमन्थश्च [1]लसन्तस्तु लसन्तिका ।
उभौ त्वरण्यजे मुद्गे[1] मकुष्टकमयष्टकौ ।
वंशवर्णः कृष्णवर्णः संवर्तो वातुलश्चणः ।
समौ खल्वक[1]निष्पावौ गोधूमः सुमनो गुरुः ।
कृष्णो[1] प्रवरवासन्तौ हरिमन्थकशिम्बिकौ ।

---

2840 1. A मन्दकः for मन्थकः. 2141. 1. BD. यवकेतो यवपर्णो for 2841a; 2. A. श्यामाकः श्यामकः for श्यामाकश्यामकौ. 2844. 1. BD. उदारुः for उदारः. 2847. 1. ABD. वृष्ट्यः for वृष्यः. 2850. 1. A. मुग्धोंधलाङ्गः, BD. मुद्गेन बलाङ्गं for मुद्गो बलाङ्गः. 2851. 1. A. वसन्तस्तिलसन्तिका for 2875b. 2852. 1. A. मुग्धे for मुद्गे. 2854. 1. B. खल्वव for खल्वक. 2855. 1. B. कृष्ण° for कृष्णो.

ताम्रवृन्तः कुलत्थः[1] स्यात् कफशत्रुः कुलत्थिका[2] ।
आढकी तुवरी सैव सौराष्ट्री करवीरिका[1] ।
सर्वं व्रीह्यादिकं सस्यं कणिशं सस्यमञ्जरी ।
सस्यशूकस्तु किंशारुः शूकोऽस्त्र्यग्रे सुतीक्ष्णके ।
माषादयः शमीधान्ये शूकधान्ये यवादयः ।
स्तम्बस्तु गुच्छो व्रीह्यादेः काण्डे नाली च नालकम् ।
पलालो निष्फलः काण्डः स्त्री गवेधुर्गवेधुका ।
खलधानं खलस्तस्मिन्[1] पशुबन्धनदारु यत् ।
समेधिर्ना शमी शिम्बा[1] बुसं पुंसि कटंकरः ।
धान्यराशिस्तु खलजो वरण्डस्तृणसंचयः ।
ऋद्धे त्वावसितं धान्ये पूतं स्याद् बहुलीकृतम् ।
भिस्सा तु भक्तमन्धोऽन्नं दीदिविर्नोदनोऽस्त्रियाम् ।
पायसं परमान्नं स्यात् भिस्सटा दग्धिका समे ।
सिक्थो ना भक्तपूलाके कृसरस्तु तिलोदनम् ।
मासराचामनिस्त्राचा मण्ड ओदनसंभवे ।
यवागूरुष्णिका श्राणा घना सा विरला त्वियम् ।
विलेपी च विलेप्या च रसाग्रे मण्डमस्त्रियाम् ।
स्थाली स्थालममत्रं स्यात् कंसोऽस्त्री पानभाजनम् ।
दारुहस्तस्तु तण्डुः स्यात् खजाका कम्बिदर्विके ।

---

2856. 1. BD. कुलस्थः for कुलत्थः; 2. BD. कुलस्थिका for लकुत्थिका.
2857. 1. A. करवीथिका for करवीरिका. 2863. 1. A. खलं for खलः. 2864. 1. A. शंबा, B शापा for शिम्बा.

पृथुकश्चिपिटस्तुल्यौ धाना [1]भृष्टयवे स्त्रियाम् ।
पुंसि भूम्नि च लाजाः स्युः पूपापूपौ तु पिष्टकः ।
भक्ष्यकारः कान्दविक आपूपिक इमे त्रिषु ।
समौ सूपश्च यूषश्च सूपकारास्तु वल्लवाः ।
आरालिका आन्धसिका सूदा औदनिका गुणाः ।
अवन्तिसोमरक्षोघ्नशुक्ताभिषुतकाञ्चिकम् ।
आरनालकसौवीरगोलकुल्माषकुण्डकम् ।
मधुसंधानधान्याम्ल[1]धान्याकसदनोकम् ।
विदंशस्तूपदंशः स्याद्भुक्तिजग्धी तु भोजनम् ।
जेमनवल्भन[1]गिलनप्रत्यवसानानि लेप आहारः ।
अभ्यवहारो [1]विघसो न्यादस्तृष्णा पिपासा तृट् ।
उदन्या[1] तर्षणं चाथ फेला भुक्तिसमुज्झितम् ।
चर्वणं भक्षणं प्सानं[1] खादनं चादनं समम् ।
क्षुद् बुभुक्षाशनाया च[1] जिघत्सा च क्षुधा च सा ।
अथाधिश्रयिणी चुल्ली [1]रन्धिकानलधारिका ।
अपक्वतक्रं सव्योषचातुर्जातगुडार्द्रकम् ।

---

2875. 1. AB. भ्रष्ट for भृष्ट. 2882. 1. A. योन्यास for धान्याम्ल. 2884. 1. A. वलगन for वल्भन. 2885. 1. A. विघसोऽन्नादस्तृ··· पिपासा, B. विघसोऽन्यादतृष्णा पिपासा, D. विघसी न्यास (?) दसुक्ष्णपिपासा for विघसो न्यादस्तृष्णा पिपासा. 2886. 1. A. उदन्या च तर्षच्छध, B. उदन्यातर्षयश्चाथ D. उदन्या तर्षश्चाथ for 2886a. 2887. 1. BD. प्लानं for प्सानं. 2888. 1. BD. °प° for च. 2889. 1. A. रन्तिका for रन्धिका.

सजीरकं रसाला सा मार्जिता शिखरिण्यपि ।
अर्धाढकं[1] सुचिरपर्युषितस्य दध्नः
खण्डस्य षोडश पलानि शशिप्रभस्य ।
सर्पिष्पलं मधुपलं मरिचद्विकर्षं
शुण्ठ्याः पलार्धमपि वार्धपलं चतुर्णाम् ॥
श्लक्ष्णे पटे ललनया मृदुपाणियुक्त(घृष्टा?)
कर्पूरधूलिसुरभीकृतभाण्डसंस्था ।
एषा वृकोदरकृता सुरसा रसाला
यासा(स्वा?)दिता भगवता मधुसूदनेन ॥
साजाजीडाडिमव्योषं पटे घट्टं (घृष्टं?) च सट्टकम् ।
शाकोऽस्त्रियां हरितकं शिग्रुः पुंस्यस्य नालिका ।
कडम्बश्च[1] कलम्बश्च वेशवार[2] उपस्करः ।
ऋजीषं पिष्टपचनं निष्ठानं तेमनं समे ।
रसको[1] मांसनिष्क्वाथः पिष्टमांसकृतो रसः ।
सौरावोऽसौ निर्लवणः शुष्कस्तु लवणोत्तरः ।
स स्या[1]ल्लवणखण्डोऽथ निष्पक्वक्वथिते समे ।
भृतमांसे[1] पिचण्डस्तु निष्कृत्तावयवः पशोः ।
वृक्षाम्लं[1] तिन्त्रिणीकं[2] च चुक्रं चैतत् समं त्रयम् ।
रामठं हिङ्गु रक्षोघ्नं जरणं भूतनाशनम् ।

2892. 1. A. deletes ll. 2892–95. 2898. 1. B. कलम्बश्च कडम्बश्च for 2898a; 2. D. वेशाहारः for वेशवारः 2900. 1. B. रसोनः D. रसेनो for रसकः. 2902. 1. BD. सस्यं for स स्यात्. 2903. 1. B. °मांसे तु चण्डस्तु for मांसे पिचण्डस्तु. 2904. 1. B. वृक्षाम्ले for वृक्षाम्लं; 2. BD. तिन्त्रिडीकं for तिन्त्रिणीकं.

सहस्रवेधि जतुकं बाह्लीकं शूकधूपनम् ।
बाष्पिका[1] कबरी पृथ्वी तत्पत्री कारवी पृथुः ।
कोलकं मरिचं कृष्णं धनं[1] पत्तनमूषणम् ।
शुण्ठिर्महौषधं विश्वं नागरं विश्वभेषजम् ।
माणिमन्थं[1] शीतशिवं नादेयं सैन्धवोऽस्त्रियाम् ।
कृतके तु बिडं पाक्यं रौमकं वसुकं समे ।
सौवर्चलं तु रुचकं दुर्गलं शूलनाशकम् ।
तत्रैवाक्षं च तार्क्ष्यं च तिलकं तत्र मेचके ।
त्रिकूटं त्रिकुटं[1] खण्डं कटं च लवणोऽब्धिजे ।
अक्षीबं वशिरस्तस्मिन् कनिष्ठं[1] क्षेत्रमूषजम् ।
औद्भिदं पांसुलवणं रूप्यं पानीयसंभवम् ।
शूलिका[1] तु महाराजी लोष्टावारं महाबिडम् ।
घटिकालवणं तूग्रं घन[1]घालकमित्यपि ।
यावशूको यवक्षारो यावको यवशूकजः ।
लवणत्रयमेतत् स्यात् सैन्धवं रुचकं बिडम् ।
सामुद्रं[1] रौमकं सिन्धुसंभवं रुचकं बिडम्[2] ।
पांसुजं चेति लवणषट्कं सौवर्चलं बिडम्[1] ।
सैन्धवौद्भिदसामुद्राण्येतल्लवणपञ्चकम् ।

---

2907. 1. B. बाष्पीकं for बाष्पिका. 2908. 1. BD समं for धनं. 2910. 1. A. माणिमन्धं शितशिवं for 2910a. 2914. 1. A. त्रिकटं for त्रिकुटं. 2915. 1. B. कनिष्ठ°, D. कनिष्ठः for कनिष्ठं. 2917. 1. BD. शूषिका for शूलिका. 2918. 1. B. घनकालकम् for घनघालकम्. 2921. 1. B. om 1. 292 ; 2. A. बिलम् for बिडम्. 2922. 1. A. बिलम् for बिडम्.

वरं सौवर्चलं कृष्णं बिडं[1] सामुद्रमौद्भिदम् ।
रौमकं पांसुजं चेति यदेतल्लवणाष्टकम् ।
त्रिकटु त्र्यूषणं व्योषं[1] कणामरिचनागरैः ।
त्रिफलामलकी पथ्या विभीतकमिति त्रयम् ।
नागरातिविषामुस्तात्रयमेतत् त्रिकर्षकम्[1] ।
तदेव हि चतुर्भद्रं गुडूचीपरिमिश्रितम् ।
त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धं त्रिजातकम् ।
तदेव चातुर्जातं स्यान्नागकेसरसंयुतम् ।
चित्रको नागरं चव्यं [1]पिप्पल्यस्याश्च मूलकम् ।
पञ्चकोलकमित्येतदथ स्यात् पञ्चवल्कलम् ।
न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलम् ।
तालपर्णी[1] पृश्निपर्णी बृहती कण्टकारिका ।
गोक्षुरः पञ्चकं चैतद्ध्रस्वपञ्चकनामकम् ।
बिल्व[1]काश्मर्य[2]तर्कारीपाटलाडुण्डुकैर्महत् ।
पञ्चमूलकमित्येतत् पञ्चमूलं तु मध्यमम् ।
बलापुनर्नवैर[1]ण्डैः सूक्ष्मपर्णीद्वयेन च[2] ।
तृणाद्यं मूलकं दर्भकाशेक्षुशरशालिभिः ।

---

2924. 1. A बिलं for बिडं. 2926. 1. D. व्योषः for व्योषं. 2928. 1. BD. कर्षणम् for कर्षकम्. 2932. 1. A. पिप्पल्यः स्याच्च, B पिप्पल्याश्च, D. पिप्पल्यास्याश्च for पिप्पल्यस्याश्च. 2935. 1. B. ताम्रपर्णी for तालपर्णी. 2937. 1. B. काष्मर्य for काश्मर्य; 2. AB. तत्कारी for तर्कारी. 2939. 1. BD °वैरण्ड° for °वैरण्डैः; 2. B. transp. ll. 2940–2950 after l. 2979; D. transp. ll 2940 –2962 after l. 2979a but gives direction for rectification after l. 2962.

जीरकद्वितयं हिङ्गु साजमोदं ससैन्धवम् ।
कटुत्रयं चाष्टचूर्णमथ स्यात् पञ्चचूर्णकम् ।
चू[1]र्णीपथ्याकुबेराक्षीकैडर्यैर्दीप्यकेन[2] च ।
घृतं मधु गुडं चेति यदेतन्मधुरत्रयम् ।
नागरेण च पिप्पल्या गुडेन च समत्रिकम्[1] ।
हरिद्राकुष्ठमांसीभिर्मुराशैलेयचम्पकैः ।
त्वचाकर्पूरमुस्ताभिः सर्वौषधिकमित्यदः ।
सर्वौषधिकसंयुक्ता संशुष्कामलकीत्वचा ।
एतत्[1] सुगन्धामलकमथ स्यात् फलपञ्चकम् ।
बीजपूरकजम्बीरनारङ्गं चाम्लवेतसम् ।
तिन्त्रिणीफलमित्येतदथ मूत्राष्टकं गवाम्[1] ।
महिष्यजाविकाश्वानां रासभोष्ट्रकदन्तिनाम् ।
टङ्कणं स्यात् क्रामणको लोहसंश्लेषणः कटुः ।
ऋद्धिराश्वासना सिद्धिर्जीवनी चेतना लघुः ।
प्राणदा बोधना लक्ष्मीः सुवृद्धिस्तु[1] तदर्थकाः (र्थिका ?)
रोमाह्वया लता रोमा तरुणी बरतगन्धिका ।
क्षुद्रदन्ती स्वादुफला श्वित्रिणी सर्वनालिका ।
समुद्रफेनः[1] फेनः स्याच्छुष्कं शुष्कपयोभवम् ।
श्वेता श्वेतनिका तुल्ये शशोर्णं शशलोमनि ।

---

2943. 1. A. शूर्णी for चूर्णी; 2. A. दीव्यकेन, B. दोप्यकेन for दीप्यकेन. 2945. 1. BD. समस्तिकम् for समत्रिकम्. 2951. 1. B. om. ll. 2951–2962. 2955 1. D. सुवृद्धिस्तु कदर्थकाः, A. समृद्धिस्तु तदर्थकाः for 2955b. 2958. 1. D. समुद्रफेना for समुद्रफेनः

क्लीबे सिक्थं मधूच्छिष्टं क्षौद्रं तु मधु माक्षिकम् ।
प्रपौण्डरीकं श्रीपुष्पं पुण्ड्राख्यं मूलसाधनम् ।
शीतपुष्पं पौण्डरीकं पौण्डर्यं पुण्डरीयकम्[1] ।
सिद्धकस्तीक्ष्णवृक्षश्च मौर्वी तु कवची समे ।
पेचकाम्लककार्पासी सिराम्ला चाम्लिका च सा ।
विष्णुक्रान्ता[1] नीलपुष्पी शुद्धाख्या [2]शुकनासिका ।
ईश्वरी नागदमनी[1] कापाली सर्पगन्धिका ।
प्रत्यक्पुष्पी ब्रह्मदण्डी वाराही नवमालिका ।
भृङ्गाह्वस्तु महानीलो महारक्तो[1]ऽलकश्च सः ।
आरामशीतला देवगन्धा कुक्कुटमर्दकः[1] ।
मांसरोहिण्यतिरुहा वृत्ता चर्मकशा कशा ।
तुङ्गा क्षीरी वंशभवा वंशाख्या तृणकेतकी ।
शृङ्ग[1]वक्त्रा महाघोषा शृङ्गी कर्कटशृङ्गिका ।
क्षीरशृङ्गी सुषिफला कुलिङ्गा कर्कटाह्वया ।
विदा तु[1] [2]विषमेदा स्याद्वयःस्था मधुरा वरा ।
शल्यपर्णी मणिच्छिद्रा महापुरुषगन्धिका ।
महामेदा देवमणिर्गन्धमांसी तु रोमशा ।
पिशाची पूतना केशी भूतकेशी जटा[1] च सा ।

---

2962. 1. after l. 2962 D. adds:—इतः परं 'सिद्धकस्तीक्ष्णवृक्ष' इत्यादि प्रकुण्डलितं वाचनीयम् । 2965. 1. BD. विष्णुक्रान्ती for विष्णुक्रान्ता; 2. A. शुद्ध° for शुक. 2966. 1. BD. मदनी for दमनी. 2968. 1. A °रक्ता° for °रक्तो°. 2969. 1. D. मर्दनः for मर्दकः. 2972. 1 A. शृङ्गि, D. भृङ्ग for शृङ्ग. 2974 1. BD. विदातु for विदा तु; 2. B. विष्ट for विष. 2977. 1. A. जटी for जटा.

विलङ्गोऽस्त्री कृमिघ्नः स्यादमोघा चित्रतण्डुला ।
तण्डुलो[1]ऽपि शिलावज्रं ग्रहं कालानुपूर्वकम् ।
शैलधूमं[1] शैलपुष्पं शैलेयं [2]धार्तराष्ट्रकम्[3] ।
कारवी[1] तु खराश्वा स्यान्मयूरो लोचमस्तकः ।
कला तु रोचनी श्यामा चित्रकृष्णा त्रिभण्डिका ।
नखं कोलदलं[1] शुक्तिः खुरः[2] शङ्खः समार्थकाः ।
गुडः क्षारोऽस्य विकृतौ मत्स्यण्डी खण्डशर्करा ।
फाणितं क्षुद्रकं खण्डमस्त्रियां शर्करा सिता[1] ।
बर्हिः[1] पुष्पं ग्रन्थिपर्णं स्थौणेयं कुकुरं शुकम् ।
अथ स्यात् [1]सर्जिकाक्षारः कपोतः सुखवर्चकः ।
सुम्निका स्वर्जिका[1] स्वर्जी योगवाही सुवर्चिका[2] ।
काकाण्डः स्याच्चोदनिका कृष्णशिम्बिर्विचक्षणा ।
लाक्षा तु तेजनी राक्षा रङ्गमाता [1]पलंकषा ।

---

2979. 1. B. तण्डुलोऽपि शिलावतृणाद्यं मूलकन्दः कशेक्षुशरशालिभिः ।, D. तण्डुलोऽपि शिलावज्रं तृणाद्यमूलकं दर्भकाशेक्षुशरशालिभिः । Both these Mss. read l 2940 after l. 2979a and om l. 2979b. and after this B reads. ll. 2941—2950 and D. ll. 2941—2962. But D. directs that the ll. 2963—2978 should be read after l. 2962. 2980. 1. D. शैलमुद्रं for शैलधूमं; 2. D. धातु for धार्त; 3. B. om. ll. 2980—2985. 2981. 1. D. खारवी for कारवी. 2983. 1. D. कोलमलः for कोलदलं; 2. A. खिरः for खुरः. 2985. 1. B. om. ll. 2980-2985. 2986. 1. A. बर्भ्रिः for बर्हिः. 2987. 1. A. स्वर्चिका, D. स्वस्तिका for सर्जिका. 2988. 1. AD. स्वर्जिता for स्वर्जिका; 2. BD. सुवर्चका for सुवर्चिका. 2990. 1. AB. फलं for पलं; D. कषंफला for पलंकषा.

जतु द्रुमामयो [1]यावोऽलक्तो रागश्च [2]दीपकः ।
एलवालुकमैलेयं सुगन्धि हरिवालुकम् ।
त्रसरेणुस्तु जालार्कमरीचिस्फुरितं रजः ।
तेऽष्टौ लिक्षा स्त्रियां ताभिस्त्रिंशता राजसर्षपः ।
ते तु गौरस्त्रयस्ते तु [1]षड् यवस्तच्चतुष्टयम् ।
गुञ्जा ताः पञ्च माषस्ते षोडशोऽक्षः स कर्षकः ।
स सुवर्णो हेमकर्षे पलं कर्षचतुष्टयम् ।
समौ [1]विस्तसुवर्णौ द्वौ कुरुविन्द(स्त?)स्तु तत्पले ।
तुला पलशतं ताभिर्विंशत्या भार एव तैः ।
आचितः पुंसि दशभिः शाकटो भार आचितः[1] ।
कार्षापणः कार्षिकः स्यात्ताम्रिके कार्षिके पणः[1] ।
व्रीहिभिस्त्रिसहस्रैर्ना कुडुबस्तच्छतोत्तरैः ।
ते चत्वारोऽस्त्रियां [1]प्रस्थ आढकस्तच्चतुष्टयम् ।
तौ[1] द्वौ शिवस्तौ द्रोणस्तौ खारी वाहो [2]निकुञ्चकः ।
इत्यतः परिमाणार्था बहवस्ते पृथक् पृथक् ।

---

2991. 1. BD. दावो रक्तः for यावोऽलक्तः; 2. A. दीपकम् for दीपकः. 2995. 1. BD. षस्यू (ड्यू?)का for षड् यवः. 2998 1. बिस्त for विस्त. 3000. 1. A. आचितः for आचितैः. 3001. 1. A. पणम् for पणः. 3003. 1. B. reads शिवस्थौ द्रौणस्थौ after प्रस्थः and deletes अढकस्तच्चतुष्टयम् ।; after प्रस्थः D. reads शिवस्तौ द्रौणस्तौ खारीवाहो निरञ्चकः. It deletes आढकस्तच्चतुष्टयम् and तौ द्वौ from ll. 3003 & 3004 and thus merges these two lines. 3004. 1. B. अस्त्रियामाढकद्रोणौ for 3024a; D. integrated this l. with the previous; 2. A. निकुञ्चिकः for निकुञ्चकः.

परिदानं [1]परीवर्तो नैमेयो [2]निमय एकार्थाः ।
नीवी परिपणमेषा मूलधनेऽथाधिकं फलं लाभः ।
स्त्रियां वणिज्या वाणिज्यं [1]व्यवहारो [2]ग्लहः [3]पणः ।
वस्नोऽर्घोऽवक्रयो मूल्यं [1]विक्रयः प्रक्रयः पणः ।
विपणः [1]पणयस्त्वाधिर्बन्धोऽथायो धनागमः ।
पण्याजीवः सार्थवाहो वैदेहो वाणिजो वणिक् ।
नैगमश्च प्रापणिकः क्रयविक्रयिकोऽपि सः ।
क्रयिकः क्रायिकः क्रेता तद्वद्विक्रयिकादयः ।
क्रये प्रसारितं क्रय्यं [1]क्रेतव्ये क्रेयमित्यदः ।
विक्रेयं पणितव्यं स्यात् पण्यं क्रय्यादयस्त्रिषु ।
व्यतीहारो विनिमयो विक्रयो भर्म वेतनम् ।
भरण्यं भरणं मूल्यं पणो भृत्या विधा भृतिः ।
कर्मण्या[1]प्यथ रोषाणो हेमादिनिकषोपलः ।
सत्यं[1]कारः स्त्रियां सत्याकृतिः सत्यापनं च तत् ।

इति *वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
वैश्याध्याय एकविंशः ॥



---

3006. 1. AC परिवृतः for परीवर्तः; 2. A. निमय इत्यधिकाः for नियम एकार्थाः. 3008. 1. A. व्यवहारे for व्यवहारः; 2. A. ग्रहः, D. ग्लवः for ग्लहः; 3. A. पणम for पणः. 3009. 1. D. विजयः for विक्रयः. 3010. 1. AD. प्रणयः for पणयः. 3014. 1. B. क्रेयं क्रेतव्यमात्रके for 3014b. 3018. 1. B. कर्मण्याथ च for कर्मण्या-प्यथ. 3019. 1. B. सत्याकारः for सत्यंकारः. * BD. om. वत्सकुलवामनभट्टबाणविरचिते.

# २२

## शूद्राध्यायः

शूद्रोऽन्त्यवर्णो वृषलः पज्जः पद्यो जघन्यजः ।
चण्डालवर्जिता एते शूद्राः संकरजा अपि ।
मूर्धा[1]वसिक्तोऽम्बष्ठश्च त्रयः पारशवोऽप्यमी ।
संजाताः क्षत्रियावैश्याशूद्रासु क्रमतो द्विजात् ।
सूतवैदेहचण्डाला ब्राह्मण्यां [1]क्षत्रियादिजाः ।
शूद्रायां क्षत्रियादुग्रस्तस्यां तु करणो विशः ।
क्षत्रियायां विशोऽर्यायां क्षत्रियाल्लब्धसंभवौ ।
क्रमान्मागधमाहिष्यौ क्षत्तार्याशूद्रयोः सुतः ।
अभिषिक्तः कुम्भकारः शूलिकश्च यथाक्रमम् ।
क्षत्रियाद्यासु संजाता ब्राह्मणाद् व्यभिचारतः ।
तस्मादाभीरमम्बष्ठा निषादी तु मनोजवम् ।
आसुताव्रतमुग्रस्त्री खंजमन्तावसायिनी ।
क्षत्रियायां तु शूद्रेण जनितः पारधेनुकः ।
ब्राह्मण्यां नापितोऽम्बष्ठाद्रजकः पारधेनुकात् ।
तक्षा तु करणाज्जातो माहिष्याद्वैणवस्तथा ।
आयोगवाच्चर्मकारो मागधात्ताम्रजीवकः ।
क्षत्रियायां तु माहिष्याज्जातौ चार्मिकसूचिकौ[1] ।

---

3022. 1. B. मूर्धाभिषिक्तो° for मूर्धावसिक्तो°. 3024. 1. A. क्षत्रिया-द्विजाः. BD. क्षत्रिया— for क्षत्रियादिजाः. 3036. 1. BD. सूत्रिकौ for सूचिकौ.

मागधात् खनकोऽम्बष्ठाज्जातो यो नापितश्च सः ।
मत्स्यबन्धस्तु करणात् करण्यां रथकारकः ।
माहिष्यादेव तस्यां तु किरातात् पलगण्डकः[1] ।
चण्डालात् पुल्कसो जातः तस्यां च श्वपचश्च सः ।
अन्येऽप्यन्योन्यसंकीर्णा बहवः क्षुद्रजातयः ।
कुलालः कुम्भकारः स्याद् भाण्डकूर्चो[1]र्ध्वनापितः ।
तस्य चक्रं भ्रमिः स्त्री स्यात् पचनं पाकमण्डलम् ।
तक्षा तु वर्धकिस्त्वष्टा स्थपती रथकारकः ।
कौटतक्षोऽनधीनः स्याद् ग्रामतक्षोऽन्वितार्थकः ।
शिलाकुट्टककुण्डाश्मतक्षाणश्च समास्त्रयः ।
वृक्षादनो वृक्षभेदी टङ्कः पाषाणदारणः ।
व्रश्चनः पत्रपरशुर्वासिः स्त्री दारुतक्षणी ।
कर्तनः स्वधितिः पुंसि कृपाणी कर्तरी समे ।
आस्फोटनी वेधनिका व्योकारो लोहकारकः ।
कर्मारः स्यादयस्कारो भस्त्रा चर्मप्रसेविका ।
संदंशः[1] स्यात् कङ्कमुखो घनः कूटोऽप्ययोघनः ।
यत्र निक्षिप्य कूटेन [1]हन्यतेऽयो निघातिका[2] ।
निधाय तक्ष्यते दारु यत्र काष्ठे स उद्घनः ।
नाडिंधमः स्वर्णकार कलादश्च समास्त्रयः ।

---

3039. 1. A. कण्टकः, B. कण्डकः for गण्डकः. 3042. 1. A. भाण्डकूर्चोर्ध्व. B. भाण्डकूर्चोऽङ्ग for भाण्डकूर्चोर्ध्व. 3052. 1. A. संदशकः स्यात्, BD. संदर्शः स्यात् for संदंशः स्यात्. 3053. 1. BD. वन्यते for हन्यते; 2. A. निपातिका, BD. निघानिका for निघातिका.

नाराची स्यादेषणिका शौल्बिकस्ताम्रकुट्टकः ।
मणिकारो वैघटिकः शाणस्तु निकषः कषः ।
शाङ्खिकः[1] स्यात् काम्बविकः शस्त्रमार्जोऽसिधावकः ।
तैजसा[1]वर्तनी मूषा वेध[2]न्यास्फोटनी समे ।
नापितः चौर(रि?)को वप्ता चण्डिलान्तावसायिनौ ।
ग्रामणीश्च दिवाकीर्तिः क्षुरो वपनशस्त्रकम् ।
निर्णेजकस्तु रजको मण्डहारकशौण्डिकौ ।
कारवः[1] शिल्पिनः सर्वे कला शिल्पं नपुंसकम् ।
सौचिकस्तुन्नवायः स्यात् स्त्रियां सूचिश्च सीवनी ।
विध्यते येन मण्यादिरावि[1]धोऽसावथ त्रिषु ।
ऊतं[1] स्यूतमुतं स्यूतिः सीवनं सेवनं समे ।
रङ्गाजीवश्चित्रकारो मालाकारस्तु मालिकः ।
निषादः स्यात् पारशवः कायस्थकरणौ समौ ।
तन्तुवायः कुविन्दः स्यात् त्रसरः सूत्रवेष्टनम् ।
वाणिव्यूतं[1] तु वानं स्यात् पिचुर्ना तूलमस्त्रियाम् ।
धाराः कार्पासतूलाः स्युस्तेषां तु प्रविसारणम्
पिञ्जनं स्याद्विहननं[1] पलगण्डस्तु लेपकः ।
तूलिका लेखनी कूर्ची पुस्तं लेप्यादिकर्मणि ।

---

3058. 1. D. शाम्बिकः for शाङ्खिकः. 3059. 1. A. तैजनोवर्तिनी for तैजसावर्तनी; 2. BD. वैधनी for वेधनी. 3063. 1 A. क्रशवः, D. कारकः for कारवः. 3065 1. B. आविद्धो° for आविधो°. 3066. 1. AD. ओतं for ऊतं. 3070. 1. A. वाणिज्जातं, B. पाणिव्यूतं, D. पाणिव्यूतं for वाणिव्यूतं. 3072. 1. BD. विहननः for विहननम्.

हरिणी लोहप्रतिमा [1]सूर्मी स्थूणान्यलोहजा ।
प्रतिच्छाया प्रतिकृतिः प्रतिमा प्रतियातना ।
अर्चा प्रत्याकृतिश्छायोपमा प्रतिनिधिः पुमान् ।
प्रतिमानोपमाने च बिम्बोऽस्त्री प्रतिबिम्बवत् ।
जाबालः स्यादजाजीवो देवाजीवस्तु देवलः ।
पाशी तु कर्णिका रज्जूर्वरत्रा तन्त्रिका वटी[1] ।
पाशो रश्मिर्गुणो बन्धो वराटः प्रग्रहो वटः ।
शुल्वं शुल्वाप्यथ व्याधो मृगयुर्लुब्धकश्च सः ।
जालिकः स्याद्वागुरिको वागुरा मृगबन्धनी[1] ।
उन्माथः कूटयन्त्रं स्याच्छल्यमस्त्री शलाकिका[1] ।
वितंसः[1] स्यान्मृगाणां च विहगानां च बन्धने ।
गृह्यन्ते पक्षिणा येन पक्षिणोऽन्ये स दीपकः ।
पशवो येन सोऽपि स्यात् स्मृतिभूर्वञ्चनापटः ।
पराधिः खेट आखेटो मृगव्याच्छोदने समे ।
मृगयाप्यथ योगाद्यो लुब्धकैर्दक्षिणव्रणः
दक्षिणेर्मा स हरिणो वध्री नध्री समे उभे ।
जीवान्तकः शाकुनिकः स्याद्वैतंसिककौटिकौ ।
तैलाजीवस्तु चक्री स्यात् पिण्याको ना खलिः[1] स्त्रियाम् ।
पादूरुपानत् स्त्री सैवानुपदीना पदायता ।

---

3074. 1. B. सूचिस्थूला, D. स्थूणिस्थूणा for सूर्मी स्थूणा. 3079. 1. AB. पटी for वटी. 3082. 1. A. मृगबन्धनः for मृगबन्धनी. 3084. 1. D. बितंसं for वितंसः. 3091. 1. A. कलिः for खलिः.

पादूकृच्चर्मकारः स्यादारा चर्मप्रभेदिका ।
संवाहकोऽङ्गमर्दः स्याच्छैलूषो भरतो नटः ।
जायाजीवः सर्वकेशी शैलाली बहुरूपकः ।
रङ्गाजीवः कृशाश्वी च चारणास्तु कुशीलवाः ।
पूरकः[1] प्लवकः केलो रज्जूयष्ट्यसिनर्तकः ।
नन्दी[1] तु पाठको नन्द्याः पार्श्वस्थाः पारिपार्श्वकाः[2] ।
स्याद्भ्रूकुंसो भ्रुकुंसश्च भ्रकुंसश्चेति नर्तकः ।
नारीवेषधरो रङ्गे सूत्रधारस्तु सूचकः ।
शक्रराघवदेवानां नर्तको भूमिकाधरः ।
शचीवलो देवरथः क्रमात् स्यादर्धमानुषः ।
रावणस्य तु रङ्गोपमर्दको भूमिकाधरः ।
रङ्गावतारी रुद्रस्य कृष्णस्य त्वर्धमानवः[1] ।
मार्दङ्गिको मौरजिकः पाणिघातस्तु पाणिघः
वेणुध्माः स्युर्वैणविका हास्यभाषी विदूषकः ।
वेश्याचार्यः[1] पीठमर्दी नर्तकी लासिका[2] समे ।
तालो विलम्बितं कालो द्रुतं मध्यं क्रिया लयः ।
ओघः साम्यं घनं तत्त्वं क्रियाथ भ्रमरी भ्रमः ।
सुरा कादम्बरी हाला प्रसन्नेरा[1] परिस्रुतिः ।

---

3097. 1. B. पूरगः for पूरकः. 3098.1. BD. नटी तु नाटको वद्याः for 3098a; 2 BD. °पार्श्विकाः for °पार्श्वकाः. 3104. 1. B. मानसः for मानवः. 3107. 1. BD. वेश्याचारः for वेश्याचार्यः; 2. A. लासकी for लासिका. 3110. 1. A. प्रसन्नगपरिस्युतः, B. प्रसन्नैरा परिष्टुतिः, D. प्रसन्नैरा परिस्रुतिः for 3110b.

वारुणी मदिरा माध्वी शुण्डा गन्धोत्तमावृता ।
परिस्नुता[1] [2]रसालेरा बलभद्रप्रिया रसा ।
मैरेयकश्यमद्यानि [1]मार्द्वीकं कापिशायनम् ।
कपिशं मोहनं कल्यमस्त्रियां मधुशीधुनी[1] ।
अनुतर्षस्त्रिसरको मेदको[1] जगलासवौ ।
सरको[1] मेदना कल्या माधवी[2] मतिमोहिनी ।
तद्भेदा माधवः पैष्टी गौली माध्वी मधूलिका ।
शुण्डापानं[1] [2]मदस्थानमापानं पानगोष्ठिका ।
मदनृत्तं[1] तु मत्तल्ली मधुवाराः मधुक्रमाः
कारोत्तरः सुरामण्डः किण्वं पुंस्येव नग्नहूः ।
आस्रुतिर्मधुसंधानमासवाभिषवावपि ।
चषकोऽस्त्री पानपात्रमुपदंशोऽपि दंशकः ।
जनंगमदिवाकीर्तिचण्डालप्लवपुल्कसाः ।
मातंगश्वपचावन्तेवासिचाण्डालपुष्यलाः ।
भिल्लाः किराताः शबराः पुलिन्दाश्च निषादकाः ।
म्लेच्छादयश्च तद्भेदाः स्तेनश्चोरो मलिम्लुचः[1] ।
मोषकस्तस्करो दस्युर्लुण्टाकः प्रतिरोधकः ।

---

3112. 1. A. परिस्नुना for परिस्नुता; 2. B. रसैलेला D. रसेलोला for रसालेरा. 3113. 1. BD. माध्वीकं for मार्द्वीकं, 3114. 1. BD. शीथुनी for शीधुनी. 3115 1. B. मोदकः for मेदकः. 3116 1. A. रसकः for सरकः; 2. B. मागधी for माधवी. 3118. 1. B. om. ll. 3118 & 3119; 2. A. मधस्थान, D. मुदास्थानं for मदस्थानं. 3119. 1. A. मदनात्तं तु मदली for 3139a. 3126. 1. B. मरिम्लुचः for मलिम्लुचः.

प्रतिरोधी परास्कन्दी चौरिकः पारिपन्थिकः ।
पाटच्चरै[1]कागरिकौ प्रतिमोष्टा निशाचरः ।
पश्यतो यो हरत्यर्थं स चोरः पश्यतोहरः ।
कर्णीसुतः[1] करवटो[2] मूलदेवः[3] कुलाङ्कुरः ।
स्तेनशस्त्रे[1] [2]फणिमुखश्चारको[3] बन्धनालये ।
स्तैन्यं स्तेयं च चौर्यं च लोप्त्रं स्याच्चोरितं धनम् ।
दासे तु भृत्यदासेयदासेरप्रेष्यकिंकराः ।
नियोज्यो गोप्यकश्चेटो भुजिष्यः परिचारकः ।
परैधितः परास्कन्दी परजातः पराचितः ।
भृतकः[1] स्यात् कर्मकरः प्रेष्यो वैतनिकोऽपि सः ।
द्यूतकृत् कितवो धूर्तश्चाक्षदेव्यक्षदेवनः ।
स्यादेवाक्षवती द्यूतमस्त्रियां कैतवं पणः ।
ग्लहोऽक्षेषु पणोऽक्षाः स्युर्देवनाः पातना इति ।
शारयोऽप्यथ शारीणां परिणायः समानयः ।
अक्षस्तु द्यूतभेदे स्यात् सभिका द्यूतकारकाः ।
अष्टापदं शारिफलं प्राणिद्यूतं समाह्वयः ।

इति *वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
शूद्राध्यायो द्वाविंशः ॥

---

3129. 1. BD. om. ll. 3129—3130. 3131. 1. D. कण्ठीसुतः for कर्णीसुतः; 2. A. कवरटः for करवटः; 3 BD. कुलदेवः for मूलदेवः. 3132. 1. A. स्तेयशस्त्रे for स्तेनशस्त्रे; 2. A. परिमुखः for फणिमुखः; 3. BD. चाकरः for चारकः. 3137. 1. BD. भृत्यकः for भृतकः. * BD. om. वत्सकुलवामनभट्टबाणविरचिते.

# २३

## विशेष्यनिघ्नाध्यायः

ब्रह्मक्षत्रियविट्च्छूद्राः साङ्गोपाङ्गैः समीरिताः ।
विशेष्यनिघ्नैरध्यायः पदैरत्राभिधास्यते ।
कुशलप्रवीणकृतमुखशिक्षितकृतकर्मनिपुणनिष्णाताः ।
पटुचतुरदक्षपेशलवैज्ञानिकविज्ञसुकलसूत्थानाः[1] ।
अर्घ्यः परार्घ्यः प्रवरो वरेण्यः प्राग्र्यः प्रवेकः प्रमुखः प्रकृष्टः ।
अनुत्तमः प्राग्रसरः प्रबर्हः श्रेष्ठोत्तमाग्रीयवरिष्ठवर्याः ।
ऋषभः कुञ्जरः सिंहः शार्दूलो व्याघ्रपुंगवौ ।
नाग इत्यादयः पुंसि श्रेष्ठार्थाः स्युः पदात् परे ।
नीचे निहीनापशदपामरेतरबर्बराः ।
विवर्णः क्षुल्लको जाल्मः प्राकृतश्च पृथग्जनः ।
त्रस्तश्चकितो दरितो भीतो विग्नो विशङ्कितस्त्रस्नुः ।
कातरभीरुकभीलुकभीरव एकादशाधीरे ।
धीरे धृष्णुवियातौ [1]धृष्णग्दधृषौ प्रगल्भधृष्टौ च ।
क्रोधनमर्षणकुपितक्रुद्धा रुष्टोऽतिकोपनश्चण्डः ।
क्षन्ता क्षमी तितिक्षुः क्षमिता मर्षी तितिक्षिता सोढा ।
मर्षणसहिष्णुसहना विक्लवशालीनविह्वलास्तु भमाः ।
पूजितमश्चितमर्चितमपचितमपचायितं महितम् ।

---

3147. 1. A. सार्थना for सूत्थानाः. 3156. 1. AC. धृष्टः प्रतिभान्वितः प्रगल्भः स्यात् for धृष्णग्दधृषौ प्रगल्भधृष्टौ च ।

मानितमर्हितनम[1]सितनमस्यिताराधिताभिराद्धानि ।
वरिवसिते वरिवस्यितमुपासितमुपचरितपरिचरिते ।
चक्षुष्यसुभगशोभनसाधुमनोज्ञाभिरामरमणीयाः ।
वल्लभदयिताभीप्सितहृद्यप्रियरुचिररुच्यकान्तेष्टाः ।
मञ्जुलमञ्जुमनोरमसुन्दरकमनीयचारुसुषमाश्च ।
हर्षमाणो विकुर्वाणः प्रमना मुदिताशयः ।
विमना दुर्मना अन्तर्मनाः स्यादुत्क उन्मनाः ।
प्रतिकृष्टनिकृष्टार्वरेफगर्ह्याधमावमाः ।
कुपूयः[1] कुत्सितः खेटो [2]याप्योऽवद्योऽवरोऽणकाः ।
आक्रुष्टो गर्हितो हेयोऽवगीतश्च निन्दितः ।
अभिभूतस्त्ववज्ञात आत्तगन्धोऽवमानितः[1] ।
परिभूतः पराभूतो [1]रीढितोऽवमतो धुतः ।
अधिक्षिप्तः [1]प्रतिक्षिप्तोऽवरीणो धिक्कृतः समाः ।
मायावी कौकुटो मायी मायिकः [1]प्रातिहारिकः ।
स्यान्नैकृतो नैकृतिकः शठः कार्पटिकोऽनृजुः ।
कुहको व्यंसको धूर्तो जाल्मः कौसृतिकोऽपि सः ।
सज्जनः सुजनः साधुर्दुर्जनः पिशुनः खलः ।
कर्णेजपः सूचकोऽथ स्यादेवोद्गू[1]र्णमुद्यतम् ।

---

3161. 1. A. नमस्यितनमसित for नमसितनमस्यित. 3169. 1. AC. आपूयः for कुपूयः; 2. A. वाच्यो° for याप्यो°. 3171. 1. A. विमानितः for °ऽवमानितः 3172. A. रीसितो°, C. रसितो° for रीढ़ितो°. 3173. 1. B. परिक्षिप्तो° for प्रतिक्षिप्तो°. 3174. 1. C. पारि for प्राति. 3178. 1. ABCD. उद्गीर्ण for उद्गूर्ण.

विश्रुतविदितख्यातप्रथितव्यपदिष्टवित्तविज्ञाताः।
सुरभिप्रतीतकीर्तितवर्णितसुकलप्रसिद्धसुगृहीताः।
गुण[1]प्रसिद्धे तु [2]कृतलक्षणाहितलक्षणौ।
महोद्यमो महोत्साहो महेच्छः स्यान्महाशयः[1]।
अर्च्यः पूज्यः प्रतीक्ष्यः सहृदयहृदयालू समौ हृष्टतुष्टौ
प्रीतप्रह्लन्नतृप्तप्रमुदितमुदितामोदिताः स्युः प्रतीते।
इभ्यस्त्वाढ्यो धनी स्यात् परिवृढ इन
ईशोऽधिभूः स्वाम्यधीशो
नेता नाथोऽधिपोऽपि प्रभुरथ बहुदः
स्थूललक्षो वदान्यः।
गृध्नुर्गर्द्धनलोलुपलोलुभलोलाभिलाषुकसतृष्णाः।
तृष्णग्लम्पट ईप्सुः साशो धन्यस्तु पुण्यवान् सुकृती।
श्रील[1]स्तु लक्ष्मणः श्रीमानस्तिमान् धनिको धनी।
उदारो दातृभोक्ता स्यादिष्टार्थोद्युक्त उत्सुकः।
स्पन्दनं किंचिच्चलनं पारिप्लवपरिप्लवे।
तरललोलचलाचलचञ्चलप्रचलकम्पनकम्प्रचलानि च।
विकटपीनविशंकटपीवराः पृथुविशालबृहत्पृथुलोरवः।
महान् भद्रश्च विपुलपीव्नी तु स्थूलपीवरे।
दभ्रमल्पं कृशं सूक्ष्मं स्तोकं च क्षुल्लकं तनु।
संशयालुः संशयिता संदेग्धा विचिकित्सकः।

---

3181. 1. AD. गुणैः, C. सिद्धाः for गुण; 2. B. कृतलक्ष्मण for कृतलक्षण 3182. 1. A. महायशाः for महाशयः. 3187. 1. C. गुरुस्तु for श्रीलस्तु.

क्षीव[1]शौण्डोत्कटा मत्ते घूर्णितः प्रचलायितः ।
स्वप्नङ्निद्रालुनिद्राणशयालुशयिताः समाः ।
मन्दस्तुन्दपरिमृजस्तन्द्रालुः शीतकोऽलसः ।
निर्निद्रः स्याज्जागरिता प्रबुद्धोन्मिषितावपि ।
ह्रीमति [1]व्रीलितह्रीतह्रीण[2]लज्जितसत्रपाः ।
ह्रीशीलोऽपत्रपिष्णुः स्यादप्रमत्तोऽवधायिनि ।
परीक्षकः कारणिको दयालुः कृपान्वितः कारुणिकः कृपालुः ।
अन्वेषको मार्गयिता विचेता गवेषकश्चानुपदीक्षकश्च ।
छन्नाच्छादितपिहितव्यवहितसंवलितसंवृतापिहितम् ।
स्थगितप्रोर्णुतरुद्धान्तर्हितमपवाहितं च संवीतम् ।
अस्तं नुत्तं विद्धं क्षिप्तं नुन्नेरिते च निष्ठ्यूतम् ।
मार्गितमृगितान्वेषितविचितान्विष्टं गवेषितं च समम् ।
अधिगतविदितज्ञातप्रतिपन्नावगतबुद्धबुधितानि[1] ।
अवसितमनितप्रेक्षितभावितवित्तप्रतीतमुपलब्धम् ।
संश्रुतवि[1]दितसमाहितसंगीर्णानि प्रतिश्रुतोपगते[2] ।
ऊरीकृतमुररीकृतमाश्रुतमङ्गीकृतं प्रतिज्ञातम् ।
रक्षितमवितं त्रातं त्राणं गोपायितं गुप्तम् ।
पालितमविता गोप्ता त्राता संरक्षिता दयिता ।
छिन्नं छातं लूनं कृत्तं वृक्णं छितं[1] दितं त्रुटितम् ।

3195. 1. A. क्लीब for क्षीब. 3199. 1. C. ह्रीलतन्द्रीण, A. व्रीलित-व्रीण for व्रीलितह्रीत; 2. AC. ह्रीत for ह्रीण. 3207. 1. BD. विदि-तानि for बुधतानि. 3209. 1. A. विन्दित for विदित; 2. BD. श्रुतावगते for श्रुतोपगते. 3213. 1. AD. चितं for छितं.

भेदितभिन्नविदारितखण्डितदलितानि पाटितं च समम्[1] ।
चोरितरुण्ठितलुण्ठितमूषितमुषितानि पञ्च तुल्यानि ।
उपचितनिदिग्धवर्द्धितमेधितमृद्धोपबृंहितं स्फीतम् ।
निर्णायकस्तु निश्चेता 'गृहयालुर्ग्रहीतरि[1] ।
सस्पृहः स्पृहयालुः स्यात् पतयालुस्तु पातुकः ।
उभावुष्णालुशीतालू उष्णशीतासहौ क्रमात् ।
श्राद्धः श्रद्धालुरर्चावानार्चो[1] वार्तस्तु वृत्तिमान् ।
वर्तिष्णुर्वर्तनो भूष्णुर्भविष्णुर्भविता च सः ।
क्षेपकः क्षेपणः क्षेपः क्षिपः प्रेरयिता नुदः ।
क्षिप्नुर्निराकरिष्णुः स्यात् समौ वर्धिष्णुवर्धनौ ।
उन्मदिष्णुस्तु सोन्मादो वन्दारुरभिवादकः ।
अथ भ्राजिष्णुरोचिष्णुविभ्राजो भ्राजितर्यमी ।
क्लिष्टे तु क्लेशितः क्षान्ते सोढमु'द्वान्तमुद्गते ।
शान्तस्तु शमितो दान्तो दमितेऽवसिते सितः ।
लीढमास्वादितं गूढं गुप्तं[1] मीढं तु मूत्रितम् ।
गुण्डितं रूषिते[1] पूर्णं पूरिते[2] याचितेऽर्दितम्[3] ।
ग्रन्थितं ग्रथितं दृब्धं[1] घ्राणं घ्रातं धृतं[2] भृतम् ।
रोमाञ्चितं तु हृषितं[1] विस्तृतं विसृतं ततम् ।

---

3214. 1. D. च तत् for च समम्. 3217. 1. ग्रहयालुर्ग्रहीतरि, B. गृहयालुर्गृहीतरि for ग्रहयालुर्गृहीतरि. 3220. 1. C. अर्च्चः° for आर्चः°. 3228. 1. B. गुप्तं पीढं, A. गुप्तमूढं, D. गुप्तं गूढं for गुप्तं मीढं. 3229. 1. A. रोषिते for रूषिते; 2. B. पूरितं for पूरिते; 3. A. °ऽर्थितम् for °ऽर्दितम्. 3230. 1. C. गृब्धं for दृब्धं; 2. C. भृतं धृतम् for धृतं भृतम्. 3231. 1. C. हृषितमास्तृतं for हृषितं विस्तृतं.

दण्डितः प्राप्तदण्डः स्यान्मुण्डितः परिवापितः ।
अविलम्बितमुच्चण्डं विलीनं विद्रुतं द्रुतम् ।
साधारणं स्यात् सामान्यं घनीभूतं तु पिण्डितम् ।
दग्धे प्रुष्टोषितप्लुष्टा विद्धे [1]छिद्रितवेधितौ ।
सक्तं लग्नं लिप्तं दिग्धं नवं गतं यातम् ।
नष्टमदृष्टं जुष्टं सेवितमथ तत्परः प्रसितः ।
छेद्नः[1] छिदुरः पीनो मेदुरो विदुरो बुधः ।
उ[1]न्नोत्तस्तिमितक्लिन्नतिमितार्द्राः समार्थकाः ।
उच्चमुत्कटमुत्तालं प्रांशूदग्रं समुन्नतम् ।
उद्धुरं तुङ्गमुन्नम्रमुच्छ्रितं दशकं समम् ।
स्थेष्ठसाधिष्ठनेदिष्ठस्फेष्ठप्रेष्ठा यथाक्रमम् ।
स्थिरबाढान्तिकबहुप्रियातिशयवाचिनः ।
स्थूलदूरयु[1]वह्रस्वक्षिप्रक्षुद्रातिशायने[2] ।
स्युः स्थविष्ठयविष्ठाद्याः श्रेष्ठो ज्यायानथ क्रमात् ।
द्रढिष्ठः क्रशिष्ठो गरिष्ठो लघिष्ठो
म्रदिष्ठः प्रथिष्ठो वरिष्ठः पटिष्ठः ।
द्रढीयान् क्रशीयान् गरीयान् लघीयान्
म्रदीयान् प्रथीयान् वरीयान् पटीयान् ॥
वर्षिष्ठोऽधिकवृद्धः स्याद् वर्हिष्ठो बहुलो भृशम् ।
स्युस्तत्र जात इत्यर्थे ह्यस्तनश्वस्तनादयः ।

---

3235. 1. BD. छेदित for छिद्रित. 3238. 1. BD. छेदनं for छेद्नः.
3239. 1. BD. इन्नोत्त for उन्नोत्त. 3244. 1. C.यव for युव;
2. A. शोधने for शायने.

यौष्माकीणस्तु यौष्माको युष्मदीयो यथा तथा ।
आस्माकीनादयोऽथ स्यान्मृदुलं मृदु कोमलम् ।
कर्कशे तु घनक्रूरकठोरदृढनिष्ठुराः ।
जरठः कठिनो नूत्नो नूतनोऽभिनवो नवः ।
नव्यो नवीनः प्रत्यग्रः[1] पुराणस्तु पुरातनः ।
प्राक्तनः प्रतनः प्रत्नः स्याच्चिरंतन इत्यपि ।
प्रसव्यो[1] निघ्न आयत्तो वशोऽधीनश्च गृह्यकः।
स्युर्मार्गणे याचनकयाचकार्थिवनीयकाः ।
तूष्णींशीलस्तु तूष्णीको नानारूपः पृथग्विधः ।
स्वच्छन्दोऽपावृतः स्वैरी स्वतन्त्रो निरवग्रहः ।
पराधीनः परच्छन्दः परवान् परतन्त्रकः ।
विधेयः प्रश्रयो वश्यः प्रणेयो निभृतः समाः[1] ।
आश्रवो वचनग्राही पुरोभागी तु दोषभाक् ।
समावच्छिगतद्वेष्यौ मलिनस्तु मलीमसः ।
समास्तेजस्विवर्चस्विभास्वद्भासुरभास्वराः ।
ईड्यः प्रशंस्यः[1] स्तोतव्यः स्तुत्यः स्तव्यः स्तवोचितः ।
उच्चावचं नैकभेदं निश्चलस्तिमिते समे ।
निबिडं निबिरीसं स्याद् घनं[1] सान्द्रं निरन्तरम् ।
सुदृढं संहतं श्लिष्टं पेलवं विरलं तनु ।
निस्तलं वर्तुलं वृत्तं स्थपुटं तु विसंस्थुलम् ।

---

3254. 1. BD. प्रत्यग्रे for प्रत्यग्रः. 3256. 1. A. प्रसेव्यः, C. प्रसेवः for प्रसव्यः. 3261. 1. BD. समौ for समाः. 3265. 1. A. प्रसस्तः, BD. प्रशस्यः for प्रशंस्यः. 3267. 1. A. स्यात् स्फूलं for स्याद् घनं.

न्यङ्नीचौ प्रह्वविनतावत्राग्रावनतौ समौ ।
कुटिलमरालं वक्रं वेल्लितमाविद्धवृजिनभुग्नानि ।
जिह्ममजिह्मप्रगुणावृजुरथ विकृतं करालविप्रकृते' ।
भ्राजितभासितशोभितराजितविद्योतितं दीप्तम् ।
स्तुतनुतशस्तपनायितपनितेडितपणायितं पणितम् ।
मूढे मूर्खवृथाजातमातृशिष्टाज्ञबालिशाः ।
मन्द'वैधेयविकला धर्महीनस्त्वधार्मिकः ॥
स्वनित'ध्वनितविरावितशब्दितसंघुष्टरसितमारणितम् ।
स्तनितं नदितमधिश्रितमधिगतमासादितं प्राप्तम् ।
सर्वमशे'षमखण्डं सकलाखिलसमग्रविश्वनिखिलानि ।
समस्तपूर्णकृत्स्नानि चरिष्णु चरजङ्गमे' ।
अचरः स्थावरे तुल्येऽत्र समिङ्गं चराचरम् ॥
स्थेयान् स्थिरतरः स्थास्नुः समौ तु च्यवनश्वरौ ।
जिघत्सुः क्षुधितः क्षुद्वान् बुभुक्षुरशनायितः ॥
पिपासितस्तु तृषितः पिपासुस्तर्षितः सतृट् ।
भुक्तजग्धाशितग्रस्तग्लस्ताभ्यवहृताहृतम्' ।
जेमितं प्रत्यवसितमन्नं गिलितवल्गिते ।
भक्षितं खादितं लिप्तं चरितं चर्वितं समम् ।

---

3272. 1. C. निकृते च for विप्रकृते. 3276. 1. A. नन्दवैडेय for मन्दवैधेय. 3277. 1. B. स्वरित for स्वनित. 3279. 1. BD. अखण्डमशेषं for अशेषमखण्डं. 3280. 1. C. जङ्गमौ for जङ्गमे. 3285. 1. A. हुताशितम्, C. कृताभूशम् for हृताहृतम्.

त्रयस्त्वात्मंभरिः कुक्षिंभरिरप्युदरंभरिः ।
स्वकुक्षिपूरके तुल्या [1]भक्षकाद्मरघस्मराः ।
स्यादौदरिक आद्यूनो विहीनो विजिगीषया ।
सर्वान्नीनस्तु सर्वान्नभुक् परान्नः परान्नभुक् ।
प्रत्युत्पन्नमतिः स स्यात् [1]तत्कालोत्पन्नधीस्तु यः ।
आशंसिता स्यादाशंसुर्विलक्षस्तु सविस्मयः ।
कुण्ठो मन्दक्रियो देवानांप्रियो नामवर्जितः ।
एकायनगतैकाग्रावेकतानैकसर्गकौ ।
एकायनैककल्पैकव्यवस्थानन्यवृत्तयः ।
यद्भविष्यो दैवपरो विहस्तव्याकुलौ समौ ।
गेहेनर्दी गृहेशूरः पिण्डीशूरो गृहेभ्रमुः ।
पृक्तः करम्बितो मिश्रश्छुरितो मिलितः समाः ।
स तु सार्वजनीनः स्याद्धितः सर्वजनाय यः ।
तथा प्रातिजनीनश्च प्रियवादी प्रियंवदः ।
स तु विश्वजनीनः स्याद्धितो विश्वजनाय यः ।
आत्मनीनस्त्वात्महितः सार्वः सर्वहितश्च [1]यः ।
यः सहाञ्चति सध्र्यङ् स विष्वद्र्यङ् विष्वगञ्चति ।
देवानञ्चति देवद्र्यङ् स तिर्यङ् यस्तिरोऽञ्चति ।
प्रत्यक्परागर्वाक्तिर्यक्प्रागुदग्विष्वगादयः ।
दिग्देशकालवचनाः शब्दाः स्युः क्वचिदव्यये ।
अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम् ।

---

3289. 1. C. भक्षकोऽघस्मरोऽद्मरः for 3289b. 3292. 1. A. कालोत्पन्नसुधीस्तु यः for 3312b. 3303. 1. A. सः for यः.

सिंहसंहननः श्रेष्ठरूपवान् प्रशमी प्रशान् ।
तदासेचनकं तृप्तिर्नास्ति यस्य हि दर्शनात् ।
दृढे[1]तरस्तु शिथिलो दीर्घसूत्रश्चिरक्रियः ।
उच्छृङ्खलं स्यादुद्दामं निरङ्कुशमनर्गलम् ।
संबाधः संकटो रीणः चीणो मूर्तस्तु मूर्तिमान् ।
कुद्दाकश्छेदकश्छेत्ता शरारुर्हिंस्रघातुकौ ।
पूतः पवित्रः प्रयतः पुण्यो मेध्यश्च शुद्धवत्[1] ।
निवृतं[1] तु परिचिप्तं कलिलं[2] गहनं समे ।
जैवातृक आयुष्मान् स्फीतं वृद्धं बहुकरः खलपूः ।
दचिणसरलोदारास्तुल्याः सुकलः स दातृभोक्ता यः ।
अन्तिकनिकटसनीडाभ्यर्णाभ्यग्रोपकण्ठसविधास्तु ।
आसन्नसंनिकृष्टाभ्याशसमर्यादसाग्रकसदेशाः ।
समीपे स्थुरलिङ्गे तु समया निकषाऽभितः ।
परोचोऽतीन्द्रियोऽध्यचप्रत्यचौ तु समचवत् ।
प्रकाशं प्रकटं स्पष्टमुल्बणं विशदं स्फुटम् ।
साधु कर्मणि कर्मण्यः कर्मकारस्तु तत्क्रियः ।
कर्मचमोऽलंकर्मीणः कर्मी स्यात् कर्मणि [1]स्थितः ।
कार्मस्तु कर्मशीलः स्यात् कर्मशूरस्तु कर्मठः ।
क्रियावान् कर्मसूद्युक्तः समौ संकुसुकास्थिरौ ।

---

3311. 1. C दृढरेतास्तु for दृढेतरस्तु. 3315. 1. B. शुद्धिमत्, D. शुद्धवान् for शुद्धवत् 3316. 1. A. निवृत्तं for निवृतं; 2. D. सलिलं for कलिलं. 3325. 1. B. स्थिरे, D. स्थिरः for स्थितः.

विन्नं निर्लोडितं वित्तं भावितं च विचारिते ।
पतितं चरितं पन्नं स्यन्नं स्कन्नं स्रुतं स्नुतम् ।
स्रस्तं ध्वस्तं च्युतं रीणं गलितं भ्रष्टमित्यपि ।
शातं निशातं निशितं च तीक्ष्णं
क्ष्णुतं च मर्मस्पृगरुंतुदं स्यात् ।
न्यस्ते निसृष्टं पुषिते तु[1] पुष्टं
त्वष्टं च तष्टं च तनूकृते [2]द्वे ॥
वावदूको वदो वादी वक्ता वाग्मी वदावदः ।
स्याद्वाचोयुक्तिकुशलो वागीशो वाक्पतिः प्रवाक् ।
समौ जल्पाकवाचालौ वाचाटो बहुनिन्द्यवाक् ।
कुवादी कुचरो गर्ह्यवादी कद्वद इत्यपि ।
दुर्मुखौ मुखराबद्धमुखौ [1]शक्तः प्रियंवदः ।
शब्दनो रवणो [1]नान्दीवादी नान्दीकरः समाः(मौ?) ।
उपस्थितं तूपनतं समे मसृणचिक्कणे ।
अनायासकृतं फाण्टं काचितं [1]शिक्यितं समे ।
उत्क्षिप्तोदञ्चितोदस्तोद्धृतोद्गमितमुद्धतम् ।
उत्थापितं [1]चोन्नमितं चटुलं[2] चलितार्थकम् ।

---

3332. 1. B. च for तु; 2. B. च for द्वे. 3337 1. A. श्लक्ष्णः, B. शक्यः for शक्तः. 3338. 1. A. नादी ( deletes वादी ), D, नादी वादी for नान्दीवादी. 3340. 1 A. चिक्कितं, B. शिक्षितं, C. चक्तितं, D. चिच्चितं for शिक्यितं. 3342. 1. BD. तून्नमितं, C. चानमितं for चोन्नमितं; 2. A. चटलं, C. वलितं for चटुलं.

व्युत्पन्नः[1] प्रहतः क्षुण्णः प्राप्तप्रणिहितौ समौ ।
आहतो गुणितोऽथा[1]न्तर्गतं प्रस्मृतविस्मृतौ ।
वेल्लितं प्रेङ्खितं[1] धूतं रिङ्गितं[2] त्वङ्गितं धुतम् ।
प्रेङ्खोलितं च संतप्तो धूपितस्तापितो धुतः[1] ।
धूपायितो गुण्डितस्तु[1] रूषितो [2]रुषितः सरुट् ।
बहुलं प्रचुरं प्राज्यं भूयिष्ठं [1]पुरुजं पुरु ।
भूरिभूयःस्फिरस्फारघनादभ्रबहूनि च ।
अल्पीयोऽल्पिष्ठमत्यल्पे कनीयोऽणीयसी अपि[1] ।
त्रुटिर्मात्रा स्त्रियौ पुंसि कणलेशलवाणवः ।
शून्यं तु वशिकं तुच्छं रिक्तं च [1]विदृढो दृढः ।
निष्कासितोऽवकृष्टः स्यात् पक्षिसर्पादयोऽण्डजाः
स्वेदजाः कृमिदंशाद्या नृगवाद्या जरायुजाः ।
उद्भिदस्तरुगुल्माद्या उद्भिदुद्भिज्जमुद्भिदम्[1] ।
क्षेमंकरो रिष्टतातिः शिवतातिः शिवावहः ।
आदिराद्योऽग्रिमः[1] पूर्वः पौरस्त्यः प्रथमादिमौ ।

---

3343. 1. A. व्युत्पन्नं प्रहितं क्षुण्णं for 3343a; 2. B. प्रहितः for प्रहतः. 3344. 1. C. °ऽथान्तर्हतप्रस्मृतौ स्मृतौ for °ऽथान्तर्गतं प्रस्मृतविस्मृतौ. 3345. 1. C. प्रेङ्खिताधूतं for प्रेङ्खितं धूतं; 2. A. रिङ्खितं for रिङ्गितं. 3346. 1. B. तापितोद्धुतः, C. तापितो युतः, D. तापितोद्धतः for तापितो धुतः. 3347. 1. A. तुषितो तूष्टितः for °तु रूषितो रुषितः; 2. B. रुष्टितः for रुषितः. 3348. 1. A. भूरिजं, C. पुरिजं for पुरुजं. 3350. 1. A. °ऽणीयसीत्यपि for °ऽणीयसी अपि. 3352. 1. A. विभृतः, BD. विबृढः for विदृढः. 3355. 1. AD. उद्भिजम्, C. उद्भिदः for उद्भिदम्. 3357. 1. B. निजः for °ऽग्रिमः.

अन्तो जघन्यः पाश्चात्यश्चरमोऽन्त्योऽन्तिमोऽपरः[1] ।
समानावुत्तरोदीच्यौ दाक्षिणात्यस्तु दक्षिणः ।
समानौ प्राग्भवप्राच्यौ पक्तिमं तु पचेलिमम् ।
सदातनः सनातनो ध्रुवश्च नित्यशाश्वतौ ।
वशीकृतोऽनुकूलितः सुखाकृतः प्रियाकृतः[1] ।
अनुलोमोऽनुकूलः स्यादनूचीनस्तदर्थकः ।
प्रसव्यं प्रतिकूलार्थमपसव्यमपष्ठु च ।
सव्यं [1]वामं शरीरं स्यादपसव्यं तु दक्षिणम्[2] ।
प्रतिलोमं प्रतीकूलं[1] प्रतीपं च विलोमवत् ।
प्रापणीयं समासाद्यं प्राप्यं गम्यं समार्थकम् ।
अतिरिक्तोऽधिकार्थः स्यात् संहतं[1] दृढसंधिमत् ।
स्याद्विनाशोन्मुखं पक्कं पक्कं[1] परिणतं समे ।
भिदेलिमं प्रभिन्नार्थं छिन्नार्थं स्याच्छिदेलिमम् ।
वैरागिको[1] विरागार्हं आपन्नस्त्वापदायुतः ।
वधार्हस्त्वाततायी स्याद्विष्यो वध्यो विषेण यः ।

---

3358. 1. AB. °ऽवरः for °ऽपरः. 3362. 1. D. प्रियाविचारिते for प्रियाकृतः; After l. 3362 D. adds:—

पतितं च्चरितं पन्नं स्पन्नं स्कन्नं स्रुतं स्नुतम् ।
स्रस्तं ध्वस्तं च्युतं शीर्णं गलितं भ्रष्टमित्यपि ।
धौतं निशातं निशितं च तीक्ष्णं
क्षुतं च मर्मस्पृगरुंतुदः स्यात् । न्यस्ते निसृष्टं कृतः ॥

3365. 1. A. वामं शरीरे, C. वामे शरीरे for वामं शरीरं; 2. C. दक्षिणः for दक्षिणं. 3366. 1. BD. प्रतीकूलं for प्रतिकूलं. 3368. 1. A. सहितं, BC. संहितं, D. संहृतं for संहतं. 3369 1. D. पथ्यं for पक्कं. 3371. 1. D. वैरङ्गिकः for वैरागिकः.

मुसल्यो मुसलेन स्याद्दण्ड्यो दण्डार्ह इत्ययम् ।
एकाकी त्वसाहायः स्यादेकश्चैकैक इत्यपि ।
भिन्नार्थवाचकास्त्वेत एकान्यान्यतरेतरे ।
चपलश्चिकुरस्तुल्यौ वन्ध्यो[1] मोघो निरर्थकः ।
प्रत्याख्यातो निरस्तः स्यान्निर्वातो[1] वातवर्जिते ।
पाके क्वथितनिष्पक्वे स्याद्दुग्धहविषोः शृतम् ।
त्यक्तं हीनं समुत्सृष्टं धुतं धूतं समुज्झितम् ।
विहस्तव्याकुलौ तुल्यौ प्रत्यादिष्टो निराकृतः ।
निर्वृत्त सिद्धनिष्पन्नौ फल्ग्वसारौ समार्थकौ ।
शिश्विदानो दुराचारो विवशोऽरिष्टदुष्टधीः ।
का[1]मंगाम्यनुकामीनो ह्यत्यन्तीनस्तथा भृशम् ।
यसना[1]र्तस्तूपरक्तो विप्रलब्धस्तु वञ्चितः ।

इति * वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
विशेष्यनिघ्नाध्यायस्त्रयोविंशः ॥

——:❀:——

3376. 1. BD. वध्यः for वन्ध्यः. 3377. 1. D. निर्वाणः for निर्वातः. 3383. 1. A. कामं काम्य, BD. काम्यं काम्य°, C. कामागाम्य° for कामंगाम्य°. 3384. 1. A. उपासनाक्तसो°, BD. व्यसनार्थस्तू° for व्यसनार्तस्तू°. ❀ BCD. om. वत्सकुलवामनभट्टबाणविरचिते.

# २४

## संकीर्णाध्यायः

अथाध्यायोऽत्र संकीर्णैः[1] पदैरेवा[2]भिधीयते ।
संकीर्णे[1] लिङ्गमुन्नेयं प्रकृतिप्रत्ययार्थतः ।
साकल्यासङ्गयोः[1] स्यातां पारायणपरायणे ।
शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः ।
अनुप्रासोऽक्षरावृत्तिः स तु वीप्सा सकृत्कृतः ।
ग्रहो[1] ग्राहे[2] भिदा भेदे छिदा छेदे चये चिया ।
उपनायस्तूपनये भरो भारे भ्रमे भ्रमिः ।
हसे[1] हासः स्वने स्वानो व्यधो[2] वेधे वरो वृतौ ।
हवो[1] हूतौ तथा गीर्णि[2]र्गिरौ गुरणमुद्यमे ।
क्षिपा क्षेपे नयो नाये[1] रसे रासः स्नवः[2] स्रवे ।

---

3385. 1. A. संकीर्णः, C. संकीर्ण for संकीर्णैः; 2. BD. एकोऽभिधास्यते for एवाभिधीयते. 3386. 1. AC. संकीर्ण for संकीर्णे. 3387. 1. C. °सङ्गकौ for °सङ्गयोः. 3390 1. BD. om ll. 3390 & 3391; 2. A. ग्राहः for ग्राहे. 3392. 1. B. reads l. 3392 as:—स्वने स्वानो व्यधे वेधे वरो वृतौ पचा पाके ।, D:—सस्वने स्वानो व्यधो वेधे वरौ वृतौ पचा पाके ।; 2. C. व्यथा for व्यधः. 3393. 1. A. reads l. 3393 as:—वचापके हवो हूतौ गीर्णिर्गिरण उद्यमे ।; B:—पचा पाके भवो भूतौ गीर्णिर्गिरणमध्यमे ।; 2. C. गीर्णिर्गिरौ गुरणम्, D. शुण्ठीश्शूरणम् for गीर्णिर्गिरौ गुरणम्. 3394 1 C. न्याये for नाये; 2. A. स्रवे स्रुवे, C. स्रवः स्रुतौ, D. स्रवः स्रुवे for स्नवः स्रवे.

स्पृष्टिः पृक्तौ विधा वृद्धौ[1] क्रान्तिस्तु क्रमथः[2] क्रमे ।
उन्नाय उन्नये जूतिर्जव[1] ईतिरुपप्लवे ।
गीतिः प्रवृत्तौ[1] वृद्धौ तु स्फातिर्ज्ञातिस्तु बान्धवे ।
प्रमा तु प्रमितौ श्रायः श्रयणे मार्जने मृजा ।
अतिशायस्त्वतिशये विशयो विचिकित्सने ।
स्यादाच्छोटनमामर्दो[1] मोटनं त्ववभञ्जनम् ।
संतोषणे हलहलो दाहचूर्णोऽवचूर्णनम्[1] ।
अवटे स्यादुपशयो मृगग्रहणनिर्मिते ।
प्रस्तावे तु प्रसङ्गः स्यादभिषङ्गः पराभवे ।
जपे जापस्त्विषिस्त्विट् स्यादागूः संवित् कृतिः क्रिया[1] ।
प्रीणनं तर्पणं तृप्तिर्धावनं परिशोधनम् ।
सेवनं सीवनं स्यूती [1]रक्षणस्त्राणे क्षुधा क्षुधि ।
विमर्दनं [1]परिमलोऽभ्युपपत्ति[2]रनुग्रहः ।
प्रवहो वायुभेदे[1] स्यात् प्रवाहस्तु प्रवर्तने ।
आदीनवा[1]स्रवौ क्लेशे तेमस्तेमौ समुन्दने ।
उत्कर्षश्च प्रकर्षश्च स्यातामतिशयार्थकौ ।

---

3395. 1. A. विद्धा, BC. विद्धौ, D. बिधौ for वृद्धौ; 2. C. क्रमथुः for क्रमथः. 3396. 1. B. जवोऽरातिः for जव ईतिः. 3397. 1. A. प्रवृक्तौ, BCD. प्रवृद्धौ for प्रवृत्तौ. 3400. 1. B. स्यादाच्छोटः समामर्दे for 3400a. 3401. 1. C. च चूर्णनम् for °ऽवचूर्णनम्. 3404. 1. B. स्त्रियाम् for क्रिया. 3406. 1. AC. रक्तः for रक्षणः. 3407. 1. B परिमले for परिमलः; 2. A. व्यवपत्तिः, B. अभ्युवर्तिः, D. °ऽभ्यवपत्तिः for °ऽभ्युपपत्तिः. 3408. 1. BD. भेदः for भेदे. 3409. 1. B. आभीनवा° for आदीनवा°.

प्रदाने स्पर्शनं चारे कर्शनं दर्शनं दृशि ।
निदर्शनं तु दृष्टान्ते विचारे तु विमर्शनम् ।
दारो विदारणे हारो हृतौ वारः कदम्बके ।
प्रवासो दूरगमनं परिसर्पः परिक्रिया[1] ।
विधुरं तु प्रविश्लेषे विनाशः स्याददर्शनम् ।
प्रतिशासनमित्येतदाहूय प्रेषणं पुनः ।
वियोगे[1] विप्रलम्भः स्यादालम्भः [2]प्रतिघातनम् ।
उपलम्भस्त्वनुभवो[1] [2]विलम्भस्त्वतिसर्जनम् ।
धृतिर्मुदि वशः कान्तौ मूलकर्म तु कार्मणम्[1] ।
वशीक्रिया संवननं विहारस्तु परिक्रमः ।
अनु[1]हारोऽनुकरणं निर्हारोऽभ्यवकर्षणम् ।
परित्राणं तु पर्याप्तिर्हस्तवारणमित्यपि ।
स्यान्निग्रहः परिभव आनुकूल्य उपग्रहः ।
परिग्रहः[1] परिकर आदानं तु प्रतिग्रहः[2] ।
अभिग्रहो निरोधः स्यात् प्रग्रहः प्रतिबन्धनम्[1] ।
समुच्चयः समाहारः संहारोऽपचयः[1] समौ ।
अभिहारोऽभिक्रमण[1]मुपहारस्तु पूजनम् ।

---

3414. 1. D. परिष्क्रिया for परिक्रिया. 3417. 1 A वियोगः for वियोगेः; 2. C. परि for प्रति. 3418. 1. BD. भवे for भवः; 2. BD. विलम्भे ह्यति for विलम्भस्त्वति. 3419. 1. C. om. ll. 3419–3426. 3421. 1. BD. अनुकारो° for अनुहारो°. 3424. 1. B. with Supra line वारः for ग्राहः, for परिग्रहः; 2. BD. परिग्रहः for प्रतिग्रहः. 3425. 1. A. बधने for बन्धनम्. 3426. 1. B. चयौ for चयः. 3427. 1. ABD. अप्रक्रमणम् for अभिक्रमणम्.

प्रत्याहार उपादानं संग्राहो[1] मुष्टिबन्धनम् ।
वियामो वियमो[1] यामो यमः संयामसंयमौ ।
निग्रहस्तु[1] निकारेऽपि विग्रहः समरेऽपि च ।
वित्तवृद्धौ[1] कला द्वे तु वर्धनच्छेदने समे ।
संक्षेपणं समसनं विकृतिर्विक्रिया समे ।
परिणामो विकारः[1] स्याच्छन्दोऽभिप्राय आशयः ।
उपभोगस्तु निर्वेशः संनिधिः संनिकर्षणम् ।
धोरा[1] तु गतिचातुर्ये धारा तु जलसंततिः ।
आरा प्रवयणे तारा रज्जौ कारा तु बन्धने ।
विधूननं विधुवनं काम्यदानं प्रवारणम् ।
नास्या तु नासिकारज्जुरास्या स्यादासना[1] स्थितिः ।
प्रतिबन्धः प्रतिष्टम्भः प्रस्तावावसरौ समौ ।
विघ्नोऽन्तरायः प्रत्यूहः प्रणयस्त्वभियाचने ।
विरिब्धस्तु स्वरे क्षुब्धो[1] मन्थे[2] नेत्रं मथो गुणे ।
अवदानं[1] कर्म वृत्तं [2]निर्भर्त्सनमलक्तम् ।
महानिद्रा तु मरणं महातैलं[1] तु शोणितम् ।

---

3428. I. B. संग्रहः for संग्राहः. 3429. I. A. नियमः for वियमः. 3430. I. A. विग्रहस्तु विकारेऽपि for 3430a. 3431. I. C. चित्तवृत्तौ for वित्तवृद्धौ. 3433. AC. विकारे for विकारः. 3435. I. A. रोधा, D. धारा for धोरा. 3438. I. A. आसन, C. आसनं for आसना. 3441. I. A. क्षुप्रः for क्षुब्धः; 2. AB. मन्थ for मन्थे. 3442. I. A. अवधानं, BCD. अपदानं for अवदानं; 2. A. निर्धित्सनम्, BD निर्भर्त्सकम् for निर्भर्त्सनम्. 3443. I. C. दैवं for तैलं.

विरतिस्त्ववसानं स्यादराति[1]र्मृतिलक्षणम् ।
सूत्रं तु संग्रहोक्तौ[1] स्यात् [2]पोत्रं हलमुखेऽपि च[3] ।
कीर्तिः पङ्के ज्वरे जूर्तिरार्तिस्तु धनुषोऽग्रके ।
कोदण्डे तृणता ख्यातौ प्रथा पाण्डुवधूः पृथा ।
श्च्योतप्रघारौ[1] तु[2] समाववनायस्त्वतिक्रमः ।
ऋतीया च हृणीया च घृणार्थेऽप्यर्तनं[1] त्रयम् ।
स्याद् व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये ।
भ्रेषोऽधःपतने[1] म्लोष ओषः स्यात् संभ्रमस्त्वरा ।
यदृच्छा स्वैरताहेतुरिष्टिरिच्छा वृषा वृषे ।
द्यूते[1] दरोदरः[2] संधिः श्लेषे शाणो[3] भ्रमिर्भ्रमः ।
स्फूर्च्छा तु विस्मृतौ मूर्च्छा व्याप्तिरूर्जा त्वरुंधती[1] ।
अथारतिश्चोपरतिर्विरतिः स्यादुपारतिः ।
लवो लावश्च लवने निष्पावः पवने पवः ।
चूलिका [1]यूपशिरसि मालिका[2] भवनान्तरे ।

---

3444. 1. A. अरतिः, C. आनतिः for अरातिः. 3445. 1. BD. संग्रहोक्तं for संग्रहोक्तौ; 2. AB. पौत्रं for पोत्रं; 3. C. तथा for अपि च. 3448. 1. A. प्रकारौ, BD. प्रकारः for प्रघारौ; 2. A. समापवनायः स्वतिक्रमः, B. पवनास्त्वतिक्रमः, C. समौ अवनाकस्तु कान्तिमः for समाववनायस्त्वतिक्रमः. 3449. 1. ABCD. °ऽप्यर्थनं for °ऽप्यर्तनं. 3451. 1. A. भ्रेषोऽधःपचने for भ्रेषोऽधःपतने. 3453. 1. B. धूते. for द्यूते; 2. A. दरोररः for दरोदरः; 3. BD. शोणो for शाणो. 3454. 1. After l. 3454. AC. read :–विधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्धनः । 3457. 1. BD. धूप for यूप; 2. B. मासिका, D. मारिफका for मालिका.

कालिका मेघसंघाते [1]मधुव्यूहे मधूलिका ।
कुटी गृहे वटी पाशे घटी नाड्यां पुटी पुटे ।
यात्रा प्रवर्तने ध्वान्ते तमिस्रा [1]संस्थितिर्मृतौ ।
स्यात् स्तम्बघ्नः स्तम्बघनः स्तम्बो येन निहन्यते ।
हेलिरालिङ्गनेऽप्यङ्कपालिर्नाली तु मानके ।
परिसर्या परीसार[1] उपेक्षा प्रतिजागरः[2] ।
उपशायविशायौ द्वौ पर्यायौ[1] शयनार्थकौ ।
विस्तारो विग्रहो [1]व्यासः स तु शब्दस्य विस्तरः ।
इज्यायामपि[1] दीक्षा स्यात् प्रतीक्षा [2]प्रतिपालनम् ।
वित्तत्यागे व्ययः स्त्री तु जागर्या जागरा द्वयोः ।
स्यादाश्रय उपघ्नोऽथ डमरो[1] डिम्बविप्लवौ[2] ।
स्यादुत्कारो निकारश्च धान्यस्योत्क्षेपणार्थके ।
विलक्षणं तु शून्यार्थे प्रसूतिः प्रसवः स्रवः[1] ।
ज्यानिर्जीर्णौ क्षये हानिर्जामिस्तु कुलयोषिति ।
तीर्णिस्तु तरणे चूर्णिर्ग्रन्थे चूर्णिः कपर्दके ।

---

3458. 1. A. मधुव्यो हेमधूलिका, C. मधुव्यूहे मधू° for 3458b. 3460. 1. D. संसृतिः for संस्थितिः. 3463. 1. A. परिसारः प्रेक्षाश्च for परीसार उपेक्षा; 2. B. जागरम् for जागरः. 3464. 1. BCD. पर्याय for पर्यायौ. 3465. 1. A. °ऽप्यासः for व्यासः. 3466. 1. A. om. ll. 3466—3702. and says that these lines are missing in the original ( mātṛkā )ms. ("मातृकलो तोंभैयो आकुमोदल् तोंबै अरुपर्यंतं लेदु"); 2. B. परि for प्रति. 3468. C. डमरौ डिम्भ° for डमरो डिम्ब°; 2. B. विप्रवौ for विप्लवौ. 3470. 1. CD. स्नवः for स्रवः.

निष्ठीवस्तु द्वयोर्निष्ठीवननिष्ठेवने तथा[1] ।
निष्ठ्यूतिरथ जीवे स्याज्जीवा संधा प्रतिश्रवे[1] ।
संवाहनं मर्दनं स्यात् खल्या तु खलसंहतिः ।
आपूपिकं शाष्कुलिकमित्याद्यं [1]भूम्न्यचेतसाम् ।
ग्रामता जनता गव्या धूम्या पाश्या सहायता[1] ।
माणव्यं बन्धुता[1] च स्युर्ग्रामादीनां कदम्बके ।
हल्या हलानां ब्राह्मण्यवाडव्ये तु द्विजन्मनाम् ।
पृष्टानां [1]पर्शुकानां च [2]पृष्ठ्यं पार्श्वं कदम्बके ।
मानुष्यकं मनुष्याणां खलानां खलिनीति च ।
क्रमात् साहस्रकारीषवार्मणाथर्वणानि तु ।
सहस्राणां करीषाणां स्युर्वर्माथर्वणां गणे ।
स्फुरणे स्यात् स्फुरस्फारौ द्वयोः पारिः[1] सृणेर्गुणे ।

इति ❀ वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
संकीर्णाध्यायश्चतुर्विंशः ॥



3473. 1. C. समे for तथा. 3474. 1. C. प्रतिश्रये for प्रतिश्रवे. 3476. 1. C. भूम्नि for भूम्न्य°. 3477. 1. D. सहायिता for सहायता. 3478. 1. C. बन्धुतायाः for बन्धुता च. 3480. 1. C. पार्श्वकानां for पर्शुकानां; 2. B. पाश्व्यं पृष्ठ्यं, C. पृष्ठ्यं पाश्व्यं D. पार्श्वं पृष्ठ्यं for पृष्ठ्यं पार्श्वं. 3484. 1. B. पारिसृणी, CD. परिसृणिः for पारिः सृणेः. ❀ BCD. om. वत्सकुलवामनभट्टबाणविरचिते

# २५

## उक्तशेषाध्यायः

पूर्वाध्यायेषु यः शेषोऽभिहितेषु स उच्यते ।
अन्येषु [1]नामशास्त्रेषु प्रयोगानुपलभ्य हि ।
विश्वात्मा प्राणदः शंभुर्द्रुहिणश्च सनातनः ।
मुञ्जकेशो मुररिपुः [1]पुराणपुरुषोऽजितः[2] ।
अग्निदः पूर्वगीर्वेदः स्यादकृत्रिमगीरपि ।
शक्तिः श्रीः शूर्पकारातिरिक्षुधन्वा च [1]हृच्छयः ।
जलंधररिपुर्देवो [1]डिण्डीशः [2]पांसुचन्दनः ।
खट्वाङ्गी पश्यदलिकः [1]पाण्डुराङ्गो भगाक्षिहृत् ।
चण्डमुण्डा[1] तु चामुण्डा कर्णमोटी कपालिनी[2] ।
चर्चिका [1]चर्ममुण्डाथ वाराही [2]पञ्चमी समे ।
विनायकस्तु बुद्धः स्यादृषिर्हंस[1]स्त्रिकालदृक्
गौरेयो बर्हवासाः[1] स्यान्मघवा[2]नहिशासनः ।

3486. 1. C. वेद for नाम. 3488. 1. B. C. पुराणः for पुराण°; 2. C. °ऽच्युतः for °ऽजितः. 3490. 1. C. हृच्छ्रयः for हृच्छयः. 3491. 1. C. भिण्डीशः for डिण्डीशः; 2. B. पाण्डुनन्दनः D. पाण्डुचन्दनः for पांसुचन्दनः. 3492. 1. C. पाण्डरा° for पाण्डुरा°. 3493. 1. B. चण्डमुण्डी for चण्डमुण्डा; 2. B. °मोटी तु पालिनी for °मोटी कपालिनी. 3494. 1. B. चण्डमुण्डा for चर्ममुण्डा; 2. B. पञ्चमे for पञ्चमी. 3495. 1. C. ऋषिस्त्वङ्ग°, BD. °ऋषिः सिंहः for ऋषिर्हंसः. 3496. 1. B. °बाहः, D. वाहः for बासाः; 2. C. मघवा महि for मघवानहि°.

भूरिश्रवाश्चित्ररथो [1]वृषणाश्वस्तदर्वति ।
सूर्यभ्राता सुरगजो व्यायामः शतधारकम् ।
बहुलोऽग्निर्वसुर्ज्योतिर्जठराग्निस्तु हृच्छयः ।
झलका[1] तु महाज्वाला समुद्राग्निरबिन्धनः ।
धर्मः[1] प्रजान्तको दण्डी जीवितेशो महाभिषक् ।
नरकाः शल्मली पूतिर्मृत्तिकः संप्रतापनः ।
असिपत्रवनाद्याश्च नरकाः प्रायशो नरि ।
रक्तग्राहा निशिचरा [1]विधुराः कीकसात्मजाः
प्रत्यगाशापतिस्त्वम्बुकान्तारो जलदैवतम् ।
न[1]भःप्रवहणो वायुर्नभोजन्मा महाबलः ।
झञ्झावातः सवृष्टिः स्याद्यौतिकः स्वेदचूषकः[1] ।
सितोदरो [1]रत्नहस्तो धनी कैलासनायकः ।
अव्यये तु द्यु नक्षत्रपथः सुरपथश्च सः ।
दिनप्रणीर्दृगध्यक्षो[1] हरिच्छन्दस्तुरंगमः ।
क्षपाकरः सुधासूतिर्निशाकेतुः पुनर्युवा ।
समुद्रनवनीतं च भौमे प्रव्यालकर्षकौ ।
दीदिविर्देवमन्त्री स्यात्तिर्यग्गामी तु भार्गवः ।
शनिः स्थिरगतिः कोणो मार्ताण्डियुगवर्तकः ।

---

3497. 1. C. वृषणास्वस्तद° BD. वृषणश्वतद° for वृषणाश्वस्तद°. 3500. 1. B. झालाका, A. झलका, D. जलका for झलका. 3501. C. यमः for धर्मः. 3504. 1 BD. विसुराः for विधुराः. 3506. 1. BD. नभाः for नभः. 3507. 1. BD. यूषकः for चूषकः. 3508 1. BD. रक्त for रत्न. 3510. 1. B. मृगाध्यक्षः for दृगध्यक्षः.

राहुस्तु ग्रहकल्लोलः केतवः शिखिनः समाः ।
समे नक्षत्रधिष्ण्ये द्वे दाक्षायण्योऽश्विनीमुखाः ।
जाया त्वसिक्नी दक्षस्य दाक्षायण्योऽस्य कन्यकाः ।
कृष्णद्वैपायनः कृष्णो व्यासः सत्यवतीसुतः ।
स्याद् बादरायणिः पाराशर्योऽस्य तनयः शुकः ।
वातापिदमनोऽगस्त्यो ध्रुव उत्तानपादजः ।
कण्वकौण्डिन्यशाण्डिल्यमौद्गल्यात्रेयभार्गवाः ।
काश्यपाङ्गिरसौर्वाजगार्ग्यहारीतगौतमाः ।
वासिष्ठ[1]शाठमर्षणवाधूलागस्त्यदैवलाः[2] ।
कौत्सार्ष्टिषेणवात्सारवैश्वामित्राघमर्षणाः ।
अमी तु कण्वमुख्यानां गोत्रापत्यार्थवाचिनः ।
दिवोदासः [1]परुच्छेपी नोधा मेधाति[2]थीश्वरौ ।
सत्यश्रवाः सप्तवध्रिः [1]प्रियमेधः [2]प्रतर्दनः[3] ।
श्येनो मेध्यातिथिः शंयुः [1]प्रगाथः शकटायनः ।
ब्रह्मातिथिर्वीतहव्य[1] [ऋष्यशृङ्गो] वृषाकपिः ।
न[1]भःप्रभेदनो [2]बभ्रुर्मूर्धन्वान् कवषः प्रथः[3] ।
देवा[1]तिथिर्हरिमन्तस्त्रसदस्युः शिरिम्बिठः ।

---

3523. 1. CD. शठ for शाठ; 2. C. दैवपाः for दैवलाः  3526. 1. B. परि for परु; BD. °तिथिश्च तौ for °तिथीश्वरौ. 3527 1. B. इत्यादावृग्वेदगणयः, D. इत्याद्यृग्वेदगर्षयः for 3527b. 2. C. प्रमर्दनः for प्रतर्दनः; 3. BD. delete ll. 3528–3552; 3528 1. C. प्रगायः for प्रगाथः. 3529. 1. C. विष्टिहव्यः ऋषिषेणः for वीतहव्य ऋष्यशृङ्गः. 3530. 1. C. नागः for नभः; 2. C. बभ्रो for बभ्रुः; 3. C. पथिः for प्रथः. 3531. 1. C. दोपाति हरिति for 3531a.

घृताननाभनेदिष्ठौ रक्षोहा यक्ष्मनाशनः ।
हिरण्यगर्भो वत्स[1]प्रिरूर्ध्वसद्मा बृहन्मतिः ।
ऊर्ध्वग्रावा[1] हविर्धानः सप्तिरूर्ध्वन[ा]भाः कृतः ।
द्यु[1]म्नीको व्याघ्रपाद् द्रोणस्त[2]पुर्मूर्धा करि[3]क्रतः ।
उरुचक्रिः कुरुसुतिर्विप्रजूतिरिरिम्बिठिः[1] ।
वरतन्तुर्विप्रबन्धु[1]र्ध्रुवः कुल्मलबर्हिषः ।
जरत्कर्णो [जा]मदग्निः[1] प्रस्कण्वः[2] पावको[3] भृगुः ।
विश्वावसुः सत्यधृतिः शैरीषिस्त्रिशिरा[1] उलः ।
ऋषभः सौ[भ]रिर्विश्वमना- - -आर्थव[णः]- - -[1]।
- - -[अभि]तपा यज्ञो वातजूतिः सदापृणः[1] ।
नारायणः [शि]खण्डिन्यौ पूरुः कुत्सो बृहद्दि[वः][1] ।
दृ[1]ळ्हच्युतोऽध्रीगुर्विष्णुरग्नियूप[2] उरुक्षयः ।
सिन्धुक्षिदनिलो बि[भ्राट्] कृष्णो बिन्दुरनानतः ।
अमहीयुर्दीर्घतमा [1]मारीचांहोमुचौ लुशः ।

---

3533. 1. C. वत्सप्रीरुद्धसत्मा for वत्सप्रिरूर्ध्वसद्मा. 3534 1. C. ऊर्ध्वग्राहो for ऊर्ध्वग्रावा. 3535 1. C. द्युमनी for द्युम्नीकः; 2. C. त्रपुमूर्धा for तपुर्मूर्धा; 3. C. करीकृतः for करिक्रतः. 3536. 1. C. विप्रसूतिरिरिम्मदः for 3536b. 3537. 1 C. विप्रतन्तुः for विप्रबन्धुः. 3538 1. C. जाग्रत्कर्ण…मरग्निः for 3538a; 2. C. प्रस्कन्नः for प्रस्कण्वः; 3. C प्रवतः for पावकः 3539 1. C. त्रिशिखा उखः for त्रिशिरा उलः. 3540. 1. C. ऋभसौरिर्विश्वमना…अथर्वा…for l. 3540. 3541. 1. C. सत्यजूर्तिः सदाप्रणः for 3541b. 3542. C. नारायणः खण्डिको…पुरुकुत्सो… बृहद्दि…। for l. 3542. 3543. 1. C. दृढ for दृळ्ह; 2. C. अग्निरूपः for अग्नियूपः. 3545. 1. C. मरीकांहोमुचालुशः for 3545b.

मन्युदेवापिकर्णश्रुद्रुरुणा मथितः सुदाः[1] ।
कक्षीवन्मुष्क[1]व[चक्षु]र्विश्वकर्मदुवस्यवः ।
सोमाहुतिश्चित्रमहा वसुकृद्रुरुणो द्वितः[1] ।
वत्रि[वसु]श्रुतो मित्रो विश्वसामा सुतंभरः ।
माध्यंदिनिः सारि[1]सृको विश्वको विश्वचर्षणिः ।
विवस्वान् सप्तगुः केतुः [1]गोषूक्तयङ्गावुपस्तुतः ।
अर्चनाना [1]पूतदक्ष एकद्यूश्च महर्षयः ।
सत्त्वं राजस्तमोऽस्पृष्टं मनः [1]करणमिन्द्रियम् ।
ज्ञाने तु वित्तिः संवित्तिः प्रतिभा ज्ञानगौरवम् ।
शिल्पज्ञाने तु विज्ञानं चित्ताभोगो मनस्क्रिया ।
मिथ्यादृष्टिस्तु[1] नास्तिक्यं विवेकः पृथगात्मता ।
स्यात् पृथग्दृष्टिरध्यात्मज्ञानं ध्यानं तु चिन्तनम्[1] ।
क्लेशो[1]ऽविद्यास्मितादिः स्याद्विपाको भवितव्यता ।
प्रत्यापत्तिः पुनः प्राप्तिर्ज्ञात्वारम्भ उपक्रमः ।
वडबास्यं[1] तु पातालं सरन्ध्रे सुषिरं त्रिषु ।

---

3546. C. मन्युदेवाविकर्णांश्रृदिरूणामधिसुस्तुवः for l. 3546. 3547. C. कक्षीवान्मुञ्जवत्… विश्वकर्मदुवस्यवः for l. 3547. 3548. C. द्विजः for द्वितः. 3550. l. C. सारसृत्वो विश्वहा for सारिसृको विश्वकः. 3551. l. C गौष्कर्तागौ for गोषूक्तयङ्गौ. 3552. l. C. पूतदक्षि (क्षी) एकद्यूमहर्षयः for पूतदक्ष एकद्यूश्च महर्षयः l. 3553. l. C. कारणम् for करणम्. 3556. l. C. °दृष्टिर्नास्तिकता for °दृष्टिस्तु नास्तिक्यं. 3557. l. B. om l. 3557. 3558. l. C. केशोऽविद्यसितादि स्यात् for 3558a. 3560. l. BD. वडुबास्यं for वडबास्यं.

तमिस्रे तु तमिस्रा स्त्री नागी[1] तु स्थूलपन्नगी[2] ।
दर्वी[1] फणं गरः क्ष्वेलः स्यात्तु काकोदरोरगी[2] ।
काकोदरी भुजङ्गी च व्याली विषधरापि च ।
कथाप्रसङ्गस्तु विषवैद्ये स्यात्तन्त्रमौषधम् ।
नदराजः सिन्धुराजो यादोनाथ इरा जलम् ।
विषं च कर्षूः कुल्यायां जलशूकस्तु शैवलम् ।
समुद्रकूले मर्यादा स्यात् प्लवे [1]तल्पमद्य(द्व?)योः ।
सारणस्त्वल्पकुल्यायां जलयादो जलद्विपः ।
कुम्भिनी रत्नगर्भाब्धिनेमिरम्बुधिमेखला ।
कृष्णमृत्कृष्णभूमः[1] स्यात् [2]पाण्डुभूमस्तु पाण्डुमृत् ।
रोदस्तु रोदसी गङ्गा[1] रुमा विश्वं जगत्समे
द्रोणिस्तु शिलयोः[1] संधी रोहणो रत्नभूधरः ।
दन्तकास्तु बहिस्तिर्यक्पाषाणाः पतिता गिरेः ।
बोधिद्रुमे तु श्रीवृक्षः पलाशः[1] स्यात्त्रिपर्णकः ।
समानौ बिल्वमङ्गल्यौ मातुलुङ्गे तु लुङ्गकः ।
देविकायां महाशुक्ला दूष्याङ्गी[1] मधुकुक्कुटी ।

---

3561. 1. B. नाशी for नागी; 2. BD. पन्नगः for पन्नगी. 3562. 1. C. दर्विः for दर्वीः; 2. BD. °दरी गरी for दरोरगीः 3567. 1. C. तल्पमभ्ययोः for तल्पमद्वयोः. 3570. 1. C. कृष्णभूमिः for कृष्णभूमः; 2. C. पाण्डुभूमिः fo पाण्डुभूमः. 3571. 1. C. कुब्जा for गङ्गा. 3572. C. शिवयोः for शिलयोः. 3574. C. पालाशः for पलाशः. 3576. 1. C. पुष्याङ्गी for दूष्याङ्गी.

नारङ्गे[1] तु[2] त्वङ्ग(कुसु?)गन्ध एलकं[3] च वराम्लकः[4] ।
रोहितो रोहिषो रोही रक्तो रोहितकोऽपि च ।
बाणोऽर्जुने[1] [2]प्रियाले तु प्रियकश्च[3] मधुस्रवः ।
मदने [1]वामनेक्ष्वाकुविषपुष्प[2]फणीरसाः ।
कण्टकी गरलः[1] प्लक्षे कपिला गिरिलक्षणा ।
गुग्गुलुः कालनिर्यासो देवधूपो महेश्वरः ।
श्रीमान् स्निग्धः सर्वसहः [1]श्लेषी कामो हरप्रियः ।
जटायुरथ[1] भावज्ञा बला[2] वृन्ताथ भूर्जके ।
चर्मी[1] च भूर्जपत्रश्च[2] धूर्तो मदनदुर्द्धुरौ[3] ।
पुलकप्रावृषेण्यौ तु कदम्बः प्रियकश्च सः ।
पूगावली[1] तु कुहली[2] बदरी तु तिरीटिका[3] ।
करमर्दो वशश्चोलः कृष्णपाकफलैः पदैः ।
व्यस्तैः समस्तैर्धूमैश्च पुंसि पञ्चदशाभिधाः ।
हरणः[1] शीतलः कान्तः कमनीयश्च चम्पके ।

---

3577. B. सारङ्गे, C.—रङ्गः for नारङ्गे; 2. C. स्यात् क्रतुत्वङ्ग for तु त्वङ्गगन्धः; 3. C. लवङ्गश्च for एलकं च; 4. C. वरालकः for वराम्लकः. 3579. 1. BD. °ऽर्जने for ऽर्जुने; 2. C. प्रियालो वै तुङ्गद्रुश्च for प्रियाले तु प्रियकश्च; 3. BD. प्रियकं च for प्रियकश्च. 3580. 1. C. चमठ—कु for वामनेक्ष्वाकु; 2. BD. पुच्छ for पुष्प. 3581. 1. B. गरले for गरलः. 3583. 1. B. श्लेषिका मोहनप्रियः, C. श्येषिका मोहनप्रियः for 3583b. 3584. 1. C. जटायुधा च for जटायुरथ; 2. BD. जला वृन्ता च for बला वृन्ताथ. 3585. 1. B. वर्म, D. वमु for चर्मी; 2. B. पत्रं च for पत्रश्च; 3. D. दुर्द्धरौ for दुर्द्धुरौ. 3587. 1. CD. पूगपाली for पूगावली; 2. C. कुलली for कुहली; 3. D. कृतिरीटिका for तु तिरीटिका. 3590. 1. C. भरणः D. करणः for हरणः.

चण्डालस्तु[1] कुबेराक्षी कृष्णवृन्ता फलेरुहा ।
स्याच्छाल्मली तूलफला शबरी [1]श्लक्ष्णपत्रिका ।
कार्पासस्तु पिचव्यः[1] स्याद् भारद्वाजस्तु कुष्ठनुत्[2] ।
भार्ग्यं विषघ्नी कुष्ठाख्या पद्मा च ब्रह्मदण्डिका ।
दण्डोत्पले सहा देवा तलप्रोटे[1] प्रमेहनुत् ।
मुण्ड्यां तु मुण्डिता मुण्डा श्रमणिः श्रमणी बुधा ।
अस्थिमांसोऽस्थिसंघातोऽप्यस्थिसंनहनोऽपि सः ।
सुदर्शनायां चक्राङ्गी [1]दध्याली [2]वृषपर्ण्यपि ।
कलम्ब्यां शतपर्वा स्यात् कलम्बूर्वायसी वसा ।
निद्रालुस्तु शिवः शान्तः स्वस्तिकस्तु निषण्णकः ।
अगस्त्यः[1] [2]शुकनासोऽथ महेन्द्री तु [3]बृहत्फला ।
सुगन्ध्यल्पफला मोचा साष्ठी[1] काष्ठी[2] कदल्यपि ।
आमलक्यां षडस्रा[1] स्याच्छुक्लपुष्पा[2] हरीतकी ।
मुद्गरो मदयन्ती[1] च गवाक्षी मुक्तबन्धना ।
मल्लिकायां [1]वरारोहा गोधामल्ल्यां तु सेवनी ।

---

3591. B चाण्डावस्तु for चण्डालस्तु. 3592. 1. C. शुक्ल for श्लक्ष्ण. 3593. 1. C. पिचस्यः for पिचव्यः; 2. BD. कुण्ठनुत् for कुष्ठनुत्. 3595. 1. BD. तलपोटे for तलप्रोटे. 3598. 1. C. दृध्याली for दध्याली; 2. BD. वृत्त for वृष. 3601. 1. B. om. 1. 3601; 2. C. चक्र for शुक; 3. C महत् for बृहत्. 3602. 1. B साष्ठी for साष्ठी; 2. B. कार्षी, D. काषी, C. काली for काष्ठी. 3603. 1. C. षडर्का for षडस्रा; 2. BD. सृष्टा for पुष्पा. 3604. 1. BD. दमयन्ती for मदयन्ती. 3605. 1. C. वचोहोऽथ गोधामल्यं for वरारोहा गोधामल्ल्यां.

शिवमल्ली काकनासा बकपुष्पः[1] शिवप्रियः[2] ।
वसुहट्टोऽथ तगरो[1] नन्द्यावर्तो नभोङ्गणः[2] ।
श्वापदा हिंस्रपशवः सिंहः पारीन्द्र इत्यपि ।
व्याघ्रो[1] वरोत्कटस्तुल्यौ वराहस्तु बहुव्रजः ।
वृकधूर्तस्तु भल्लूको भल्लाटो दीर्घरोमकः ।
अथ खड्गी गणोत्साहो महिषस्तु रजस्वलः ।
हेरम्बः कृष्णशृङ्गश्च मृगस्तु वलनो लिगुः ।
वारणः पेचकी[1] कुम्भी मदवाही महामृगः ।
भद्रा[1] मन्दा मृगाश्चेति त्रिविधा गजजातयः ।
अर्वती च प्रसूस्तुल्ये रक्तदृष्टिस्तु कोकिलः ।
कालज्ञः कृकवाकुः स्याच्चिरजीवी तु वायसः ।
निशाटनी[1] मातृवाहा[2] मुखविष्ठाजिनच्छदा ।
शारिकायां तु गौराङ्गी शलभी कलहाकुला ।
विनीताङ्गो[1] दीर्घगलः[2] प्रचलाकी तु चन्द्रकी[3] ।
कपिञ्जलो वञ्जुलः स्यात् पिङ्गला ऋषिरित्यपि ।

---

3606. 1. BD. पुष्पा for पुष्पः; 2. BD. प्रिया for प्रियः. 3607. 1. BD. तरगः for तगरः; 2. C. नभोगणः for नभोङ्गणः. 3609. 1. B. व्याघ्रोत्परोत्कटः for व्याघ्रो वरोत्कटः. 3613. 1. B. पेचनः, D. पेचकः for पेचकी. 3614. 1. BC. भद्रमन्दा for भद्रा मन्दा. 3617. 1. C. निशाटिनी for निशाटनी; 2. D. मातृवाहः for मातृवाहा. 3619. 1. BC. नवीताङ्गः, D. निवीताङ्गः for विनीताङ्गः; 2. C. दीर्घदलः for दीर्घगलः; 3. BD. चन्द्रिका for चन्द्रकी.

स्यात् साकेतमयोध्यायां काशी वाराणसी समे ।
स्याद् द्वारका द्वारवती [1]कान्यकुब्जं महोदयः[2] ।
महोदयं [1]कन्यकुब्जं माहिष्मत्यां वृकस्थली ।
देवकोटिः कोटिवर्षं काकन्दी[1] वारणावतम् ।
अवन्ती[1] स्यात्तक्षशिला स्यात्तु केशं[2] कुशस्थलम् ।
स्थानीयं तु महाग्रामे[1] ग्रामार्धे[2] खेटमस्त्रियाम् ।
ब्रह्मस्थली[1] वास्तुमध्यं [2]संदंशो वास्तुकोणभूः ।
प्रान्तरं[1] ग्रामयोर्मध्यं ग्रामसीमोपशल्यकम् ।
घण्टापथः संसरणं समे वयुनवर्त्मनी ।
उपरथ्या दर्शनी स्याद् घण्टामार्गे तु निष्करः ।
समानौ दुर्गकोटौ द्वाविन्द्रकोशे[1] मतङ्कः ।
मालिका स्त्री वेश्मभेदे निर्यूहे मत्तवारणम्[1] ।
वीणा घोषवती सा तु गणेशस्य प्रभावती ।
विश्ववसोस्तु[1] बृहती तुम्बुरोस्तु कलावती ।
महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी ।
स्युर्नाटकं प्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगः समवाकारौ वीथ्यङ्केहामृगा इति ।

---

3622. 1. BD. कन्या for कान्य; 2. C. महोदयं for महोदयः. 3623. 1. BD. कान्य for कन्य. 3624. 1. C. काकदा for काकन्दी. 3625. 1. B. अवन्तिः for अवन्ती; 2. BD. कोशं for केशं. 3626. 1. BD. ग्रामः for ग्रामे; 2. B. ग्रामार्भे, D. ग्रामास्ते for ग्रामार्धे. 3627. 1. C. बृहत्स्थली for ब्रह्मस्थली; 2. BD. संदेशः for संदंशः. 3628. 1. C. प्रापेयं for प्रान्तरं. 2. BC. मध्ये for मध्यं. 3631. 1. BD. कोशः for कोशे.

रूपकाणि दशैतानि वंशो[1] वंश्यथ[2] खुङ्कणी ।
किंनरी काण्डवीणा च कुब्रीणा सारिका च सा ।
चण्डालिका तु कण्डोलवीणा चण्डालवल्लकी ।
भारती सात्त्वती चैव कैशिक्यारभटीत्यमूः[1] ।
चतस्रो वृत्तयो[1] नान्दीकरा[2] नान्द्याश्च पाठकाः ।
रसवागङ्गभावाद्यैः शास्त्रोक्तैः रूपकाश्रयम्[1] ।
नृत्तमाभ्यन्तरं नाम कालिका[1] तु विवर्णिका[2] ।
रोमाञ्च उल्लूकसनं[1] वीक्षणं तु निभालनम् ।
स्यादहृष्टिरसौम्येऽक्ष्णि पार्श्वेक्षा तु प्रलोकितम् ।
उल्लोकनं[1] तूपरिष्टात् पृष्ठतस्त्ववलोकनम् ।
उन्मीलनं स्यादुन्मेषो निमेषस्तु निमीलनम् ।
भ्रूकुटिर्भ्रुकुटिः[1] सारी रेचितं[2] त्वल्प(त्वेक?)या भ्रुवा ।
निकुञ्चितशिरोग्रीवमट्टहासो महाहसः ।
सोत्प्रास[1]माच्छुरितकं प्रलयोऽस्पन्दनस्थितिः ।
जञ्जभा[1] मुखभेदे स्यात् तालिका[2] तु वितालिका ।

---

3638. 1. C. वंश्यः for वंशः; 2. BD. वंशी तु for वंश्यथ. 3641. 1. B. ह्यमूः for °त्यमूः. 3642. 1. BD. रीतयः for वृत्तयः; 2. C. नान्दीकाराः for नान्दीकराः. 3643. 1. C. रूपकं श्रियः, D. रूपकात्र-यम् for रूपकाश्रयम्. 3644. 1. C. मालिका for कालिका; 2. D. विकण्ठिका for विवर्णिका. 3645. 1. C. उन्मूकसरं for उल्लूकसनं. 3647. 1. A. उल्लूकनं for उल्लोकनं. 3649. 1. B. भ्रुकुटिर्भ्रूकुटिः सारिः for 3649a; 2. C. रोचितं for रेचितं. 3651. 1. C. सोत्प्राशम् for सोत्प्रासम्. 3652. 1. C. — जृम्भा for जञ्जभा; 2. BD. कालिका for तालिका.

ज[1]यादञ्जमुभे[2] स्यातामव्यये मोहनं रतम् ।
विवाहो नन्दनो[1] वप्ता पतिः स्त्री संततिः सुतः ।
कटीरः[1] कटिरारोहः[2] [3]श्रोणिरासा[4] तु सीवनी[5] ।
वक्षोरुहावुरसिजौ भगस्मरगृहे समे ।
समौ करङ्ककङ्कालौ पृष्ठग्रन्थौ गडुः पुमान् ।
ध्वजे नालं च मेढ्रं[1] स्यात् [2]कुरलाश्चूर्णकुन्तलाः ।
पर्यस्तिका[1] तु पर्यङ्के [2]तस्मिन्नेवावसक्थिका ।
गौणिका[1] स्यात् पुटकुटी[2] तस्यां गुणलयिन्यपि[3]
स्याद्वेत्रासनमासन्दी[1] गृहस्थो गृहमेधिनि ।
मारिः स्त्री मारको रोगः[1] केशघ्नस्त्वि[2]न्द्रलुप्तकः ।
मीमांसको जैमिनेयो वेदान्ती ब्रह्मवादिनि ।
वैशेषिकः स्यादौलूक्यः सौगतः शून्यवादिनि ।
नैयायिकस्त्वाक्षपादो बार्हस्पत्यस्तु नास्तिकः ।
पारिषद्याः पार्षदाः स्युः सभ्या [1]याज्ञात्ववायसी[2] ।

---

3653. 1. C. जायायां दमितं यः स्यात् for 3653a; 2. B. उद् (त?) for उभे. 3654. 1. C रन्दरः for नन्दनः. 3655. 1. C. कटिरः for कटीरः; 2. C. °रारोहौ for °रारोहः; 3. CD. श्रोणी for श्रोणि; 4. C. नासा for रासा; 5. BD. पीवनी for सीवनी. 3658. 1. BD. मेढ्रः for मेढ्रं; 2. BD. कुरणाः for कुरलाः. 3659. 1. BD. पर्याप्तिका for पर्यस्तिका; 2. B. तस्मिन्नेवावचत्रिका; C. तस्मिन्नेवास— D. तस्मिन्नेवावथिका for 3659b. 3660. 1. BD. गोणिका for गौणिका; BD. कटी for कुटी; 3. BD. तस्याङ्गुलिलयिन्यपि for 3660b. 3661. 1. B. आसन्द्री for आसन्दी. 3662. 1. BD. रोहः for रोगः; 2. B. केशवः for केशघ्नः. 3666. 1. C. परीषवः पारिषद्यः सभ्यायां ज्ञात्ववायसी for 3666; 2. B. यज्ञो for याज्ञा.

स्यात् पारिरक्षिको[1] भिक्षुरभ्युत्थानं तु गौरवम् ।
पञ्चार्थिकः[1] पाशुपतो वैष्णवः पाञ्चरात्रिकः ।
कौलस्त्वान्वयिको[1] योगी कापालिकमहाव्रतौ ।
सत्यव्रतो हरिश्चन्द्रः ककुत्स्थस्तु[1] पुरंजयः ।
अर्जुनः कार्तवीर्यः[1] स्यात् पृथुर्वैन्य उभौ समौ ।
निषधस्तु नलोऽथ स्याज्जनको मिथिलाधिपः ।
हनूमानाञ्जनेयश्च हनुमान्मारुतात्मजः ।
सुग्रीवः कपिराट् तुल्यौ द्वौ जटायु[1]जटायुषौ ।
अजातशत्रुः शल्यारिर्धर्मपुत्रो युधिष्ठिरः ।
गुणो वायुसुतो भीमो भीमसीनो वृकोदरः ।
अर्जुनः फल्गुनो जिष्णुः सव्यसाची धनंजयः ।
कृष्णः किरीटी बीभत्सुः कर्णशत्रुः कपिध्वजः ।
गाण्डीवी विजयः श्वेतवाहो मध्यमपाण्डवः ।
पाञ्चाली द्रौपदी कृष्णा याज्ञसेनी च पार्षती ।
सौत्रस्तिकः पुरोधाः स्याद्गणकादेशकौ[1] समौ ।
कौशलिकं[1] प्राभृतकं संघर्षः स्पर्धया समः ।
अपर्यालोचितारम्भे[1] रभसो रभसाव्ययम् ।

---

3667. 1. C. पारिरक्षकः for पारिरक्षिकः. 3668. 1. BD. पाञ्चालिकः for पञ्चार्थिकः. 3669. 1. C. कालस्त्वान्वधिकः for कौलस्त्वान्वयिकः. 3670. 1. BD. काकुत्स्थस्तु for ककुत्स्थस्तु. 3671. 1. D. कार्तवीर्यश्च for कार्तवीर्यः स्यात्. 3674. 1 C. जटायुश्च जटायुषः for 367 b. 3681. 1. C. गणिकादेशिकौ for गणकादेशकौ. 3682. 1. B कौशलीकः for कौशलिकं. 3683. 1. BD. °रम्भैः for °रम्भे.

उत्कोचः पुंसि लम्बा[1] स्त्री सेनार्थे दण्ड इत्ययम् ।
वृद्ध्याजीवो[1] द्वैगुणिको भक्तं क्रूरमिमे समे ।
शामिताम्लकदुग्धार्द्रा पक्का[1] खण्डे [2]घृतोत्तरे ।
संधापोतं[1] युता चूर्णैः खण्डैलामरिचार्द्रकैः[2] ।
क्षीराढ्यः[1] शमितापिण्डो [2]घृतपूरो घृतभृतः ।
फेनकः शमिता[1] शुक्ला घृतपक्का[2] सशर्करा ।
स्त्रियां तु शष्कुली पिष्टगुडतैलतिलैः[1] कृता ।
सतीनकस्तु सातीनः समावुद्दालकोद्रवौ ।
समौ तु [1]वल्लनिष्पावौ राजिका राजसर्षयः ।
व्यञ्जनं[1] शृङ्गिबेरेण संस्कृतं शार्ङ्गिबेरकम् ।
दाधिकं संस्कृतं दध्ना सार्पिषं[1] सार्पिषा तु यत् ।
भू[1]मिर्भूकटकं[2] भृष्टं[2] भटित्रं चादिमं[3] स्त्रियाम् ।
लावणौदकिकं तत् स्यात् पक्वं यल्लवणोदकैः ।

---

3684. 1. BD. लाम्बा for लम्बा. 3685. 1. B. वृत्त्याजीवः, C. वुद्ध्याजीवः for वृद्ध्याजीवः. 3686. 1. C. कक्का for पक्का; 2. BD. कृतो° for घृतो°. 3687. 1. BD. संयायोऽयं for संधापोतं; 2. BD. मरिचावृकैः (तैः?) for मरिचार्द्रकैः 3688. 1. BD. क्षीराम्येश्शमिता for क्षीराढ्यः शमिता; 2. BD. घृतपूरे for घृतपूरः. 3689. 1. BD. शमितः for शमिता; 2. BD. पक्काल्पशर्करा for पक्का सशर्करा. 3690. 1. C. घृतैः for तिलैः. 3692. C. चय D. पल्ल for वल्ल. 3693. 1. C. व्यजनं for व्यञ्जनं. 3694. 1. D. सार्पिष्कं for सार्पिषं. 3695. 1. B. भूमिभूकटकं, D. भूमिभूकुटकं for भूमिर्भूकटकं; 2. C. भ्रष्टं for भृष्टं; 3. D. चादिम for चादिमं.

सुरुङ्गा[1] स्त्री पुमान् संधिर्व्यलीकं वञ्चनं समे ।
अथ क्लीबे घटीयन्त्रं पादावर्तो[1]ऽनुघट्टकः ।
जतुत्रपुविकारे तु जातुषं त्रापुषं त्रिषु ।
पादुकायां तु पादूः स्त्री गल्लकः[1] पानभाजनम् ।
संमुखीनस्त्वभिमुखः सुमुखस्तु प्रगल्भवाक् ।
कृतकृत्यः कृतार्थः स्यात् समौ न्यक्तनिकृष्टकौ ।
असम्मतः प्रणाय्यः स्याद्यस्तु स्वस्थानमास्थितः ।
परान्[1] द्वेष्टि स गोष्ठश्व ईर्ष्यालुकुहनौ समौ ।
तीक्ष्णोपायेन योऽन्विच्छेत् स्यादायःशूलिकश्च सः ।
उल्बणस्तूद्धतस्तु[1]ल्यावात्मवद्धशिनौ समौ ।
वल्गुहारी मनोहारी [1]परिविष्टं तु वेष्टितम् ।
बलाद्गृहीतमा[1]च्छिन्नं समे बहलपीवरे ।
[1]प्रेङ्खितं स्याद्विलुलितं शालिश्रेष्ठा[2]वुभौ समौ ।
परभागो गुणोत्कर्षे संदर्भो रचना न ना ।
प्रणिपातः प्रणामः स्याद्दाक्षिण्यमनुकूलता ।
कक्ष्या तुलायां कौसीद्यमालस्यं चयनं चयः ।

---

3697. 1. BD. सुरुहा for सुरुङ्गा. 3698. 1. C. °वर्तोरु° for °वर्तोऽनु°. 3700. 1. B. पल्वकं, C. गल्लकं for गल्लकः. 3704. 1. BD प्रजां for परान्. 3705. 1. BD. स तु स्यादायशूलिकः for 3705b. 3706. 1. C. तुल्यावाभवच्छशिनौ for तुल्यावात्मवद्धशिनौ. 3707. 1. C. परिशिष्टं for परिविष्टं. 3708. 1. C. आच्छन्नं for आच्छिन्नं. 3709. 1. BD. प्रलुलितं for प्रेङ्खितं; 2. C. श्रेष्ठौ समावुभौ for श्रेष्ठावुभौ समौ.

परिनापस्तु दवथुरनुतापो [1]विसूरिता ।
सादोऽवसन्नता खेदः क्रीडनं तु विनोदनम् ।
अर्थना तु धनाया स्यादीहनं चेष्टनं समे ।
वितर्कस्तु विकल्पः स्यादत्यायानमतिक्रमः ।
अथाशयः स्यादाकूतं[1] समे ग्रन्थनगुम्फने[2] ।
काण्डस्तृतीयोऽनु[1]क्रान्तः साङ्गोपाङ्गैः सविस्तरैः ।
नृब्रह्मक्षत्रविट्शूद्रैरध्यायैरिह चाष्टभिः ।
विशेष्यनिघ्नसंकीर्णसहितैः सोक्त[1]शेषकैः ॥

इति * वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
उक्तशेषाध्यायः ❁❁पञ्चविंशः ॥
॥ इति तृतीयः काण्डः ❁❁❁ समाप्तः ॥

—— :❁: ——

3713. 1. BD. विसूरिका, C. विधूयत्रा for विसूरिता. 3717. 1. BD. अकूतं for आकूतं; 2 C. गुम्भने, D. कुम्भने for गुम्फने. 3718. 1. C. वृत्तान्तः for °ऽनुक्रान्तः. 3720. 1. B. स्वोक्त for सोक्त. ❁ BD. om. वत्सकुल. ❁❁ सप्तविंशः for पञ्चविंशः. ❁❁❁. Ms. C. from Mysore ends here with a note in Tamil saying that the ms. is incomplete ("inda nighaṇṭu mukiyavillai inda eṭṭile")

चतुर्थः काण्डः

# २६

## अनेकार्थाधिकारः

अथा¹ऽध्यायैरनेकार्थाः प्रोच्यन्तेऽत्र यथोदितम् ।
क्वचिदेवैकलिङ्गाश्च नानालिङ्गा अपि क्वचित् ॥
ते तु द्वित्रिचतुःपञ्चवर्णात्मपदसंग्रहात् ।
अकरादिक्रमादा च हकारान्तात् प्रयोगिणः ।
अजः पितामहे विष्णौ हरे छागे रघोः सुते ।
अर्थो धने शब्दवाच्ये शास्त्रे हेतौ प्रयोजने ।
निवृत्तौ याचने मोक्षे विषयव्यवहारयोः ।
वस्तुन्यथाक्ष ¹आधारे व्यवहारे कलिद्रुमे ।
द्यूतभेदे ¹ग्लहे कर्षे शकटेऽप्यक्षमिन्द्रिये ।
अट्टः ¹पक्वौदने घातेऽतिशये क्षौमवेश्मनि ।

---

3721. I. BD. before I. 3721 add:

शेषाद्रिनाम्ना विदुषोपनीत-
स्तूण्डीरखण्डादिह केरलेषु ।
श्रीशब्दरत्नाकरनामधेयो
निघण्टुवर्योऽयमखण्डभूमा ।
ग्रन्थेऽस्मिन् क्षत्रियाध्यायपर्यन्तमतिसुन्दरम् ।
पञ्चाध्यायी ततः पश्चादुत्तरोत्तरमाकुला ।

3728. I. A. आधार for आधारे. 3729. I. BD. व्यये for ग्लहे.
3730. I. B. मह्वोदने for पक्वौदने.

अङ्कश्चिह्नान्तिकोरःसु भृङ्गवृश्चिकयोरलिः ।
अर्कस्तु स्फटिके ज्येष्ठे वृक्षभेदे विवस्वति ।
वर्धमानतिथिप्रायपक्षकीलकयोरणिः ।
चन्द्रे धन्वन्तरौ शङ्खेऽप्यब्जोऽब्जं सरसीरुहे ।
अंशुर्मयूखे सूत्रादिसूक्ष्मांशे भासि भास्वति ।
अणुः सूक्ष्मे व्रीहिभेदेऽप्यर्घोऽर्चायां [1]प्रतिक्रये ।
अस्र आस्र उभौ [1]क्लेशे क्लीबे तु रुधिराश्रुणोः ।
अन्तोऽस्त्र्यवसिते प्रान्ते निश्चये चरमे मृतौ ।
अविरर्के गिरौ मेषे स्त्री तु स्याद्भूम्युदक्ययोः ।
अद्रिरर्के [1]द्रुमे शैले व्याले वृत्रासुरेऽप्यहिः ।
अर्चा पूजाप्रतिमयो[1]रर्तिश्चा[2]पाग्रपीडयोः ।
कोदण्डायुधयोरस्त्रमभ्रं व्योम्नि पयोमुचि ।
हयकुत्सितयोरर्वा स्यादर्यः स्वामिवैश्ययोः ।
घृष्टिमूषि[1]कयोराखुरारो भौमारकूटयोः ।
आत्मा तु जीवपरयोः शरीरे स्वस्थभावयोः ।
धृतावग्नौ मतौ वातेऽप्याधिर्व्यसनबन्धयोः ।
अधिष्ठाने चित्तदुःख आस्था गोष्ठीप्रतिज्ञयोः ।
तत्परत्वेऽवलम्बेऽथ शुभवाक्याहिदंष्ट्रयोः ।
आशीः स्यादभिलाषेऽथ स्यादिनः स्वामिसूर्ययोः ।

---

3736. 1. AB. प्रतिक्रिये. for प्रतिक्रये. 3737. 1. BD. delete क्लेशे. 3740. 1. A. ध्रुवे for द्रुमे. 3741. 1. BD. आर्तिः for अर्तिः; 2. A. छायाग्रपिण्डयोः for चापाग्रपीडयोः.

इरा सुराम्बुभूवाक्षु सगोनडीषु[1] तास्विडा[2] ।
इला तु तासु साध्व्यासु[1] स्यादिष्टिर्यजनेच्छयोः ।
सुत्रामसूर्ययोरिन्द्र ईतिः क्लेशोपसर्गयोः[1] ।
उस्रो मयूख उस्रा गौरुमा शैलात्मजातसी ।
उषः काल्यमुषा रात्रिरूतिः स्यूत्यभिरक्षयोः ।
ऊर्णा तन्तौ भ्रुवोरन्तरावर्तेऽव्यादिलोमसु[1] ।
ऋतं तथ्ये शिलोञ्छे च ऋतुर्ग्रीष्मादिपुष्पयोः ।
ऋषयः श्रुतिभृग्वादिज्ञानवृद्धदिगम्बराः ।
ऋक्षोऽच्छभल्ले मण्डूकपर्णे[1] ऋक्षं तु तारके ।
ओघः परंपरासंख्यप्रवाहेषु कदम्बके ।
कामः काम्यस्मरेच्छासु कलहेऽन्त्ययुगे[1] कलिः ।
कालः शनैश्चरेऽनेहस्यन्तकेऽत्ययवर्णयोः ।
शिक्ये दृग्रुचि मृद्भेदे काचः [1]काशः शरे त्विषि ।
करिगण्डे [1]शवे श्रोण्यां [2]कलिञ्जे च भृशे कटः ।
मेघाश्मनि बलौ हस्ते करिहस्ते घृणौ करः ।
कोणोऽश्रौ लगुडे सौरौ केतुरङ्के ध्वजे ग्रहे ।
मुख्ये दुर्जात उत्पाते कणो लेशे कणौ(णो?)षणा ।

---

3750. 1. BD. सनोनाडीकृतास्विडा for 3750b; 2. A. नडूविडौ for तास्विडा. 3751. 1. BD. सर्वासु for साध्व्यासु. 3752. 1. A. नर्तयोः for सर्गयोः. 3755. 1. D. व्याधि for °ऽव्यादि. 3758. 1. B. मण्डूके वर्णे, D. मण्डूकवर्णे for मण्डूकपर्णे. 3760 1. A. °ऽत्ययगे, B. ऽन्ययुगे for °ऽन्त्ययुगे. 3762. 1. B. काचं for काशः. 3763. 1. A. श्रवे for शवे; 2. A. केलिञ्जे for किलिञ्जे.

कुट्मले पुस्तकेऽर्थौघे दिव्येऽण्डेऽसिपिधानके[1] ।
मेहने[1] वेष्टके गेहे शरीरे कोशमस्त्रियाम् ।
अलंकृतायां कन्यायां दातुं कूपः प्रहावपि ।
कविः काव्यकृति[1] प्राज्ञे वाल्मीकौ दैत्यदेशिके ।
कोलोऽस्त्री चव्यपिप्पल्योः[1] पुमान् खड्गे प्लवे किटौ ।
क्लीबे तक्कोलबद[1]रव्योषशुण्ठीषु[2] कर्षके ।
कर्णः श्रोत्रे रविसुतेऽरित्रभेदे नियामके ।
लून[1]श्रोत्रवृषे कल्यस्त्रिषु दक्षे निरामये[2] ।
पेषणे रजसि क्षोदः क्षारस्तु गुडभस्मनोः ।
काण्डोऽस्त्री दण्डवर्गेषुनालावसरवारिषु ।
कण्ठः शब्दे गले कुम्भो घटद्विपशिरोंऽशयोः[1] ।
कूटोऽस्त्री पुञ्जमायाद्रिशृङ्गायोघ[1]नवेश्मसु ।
फाले बाणान्तरे दम्भे भग्नशृङ्गवृषे तु ना ।
तरक्षौ रक्षसि क्रव्याल्लुब्धके च चितानले ।
वराहे वक्षसि क्रोडः क्रोडमुत्सङ्गकुक्षिणोः ।
कल्पान्तेऽपचये वासे करिपादांशके क्षयः ।
क्लृप्तौ कल्पद्रुमे न्याये कल्पः कीशे[1] गजे कपिः ।

---

3767. 1. D. पिधानयोः for पिधानके. 3768. 1 D. कमेहने पेष्टगेहे for 3768a. 3770. 1. A. काव्याकृतिः for काव्यकृति. 3771. 1. B. पिल्वल्योः for पिप्पल्योः. 3772. 1. B. बदिर for बदर; 2. B. शुण्ठीष्ट for शुण्ठीषु. 3774. 1. A. लूनः श्रोत्रवृषे for लूनश्रोत्रवृषे; 2. BD. om. 1. 3774. 3777. 1. D. °ऽसयोः for °ऽशयोः. 3783. 1. A. केशे for कीशे.

कश्यस्त्रिषु कशाताड्ये कश्यं [1]मद्याश्वमध्ययोः ।
क्रमस्तु पादविक्षेपे वेदपाठान्तरे[1] विधौ ।
उत्सवेऽवसरे मध्ये[1] कालभेदाल्पकालयोः ।
हिंसाव्यापारवैकल्यपरतन्त्रत्व[1]पर्वसु ।
क्षणोऽथ क्रोश आक्रन्दे गव्यूतिद्वय[1]गर्हयोः ।
आह्वाने रोदने क्लेशस्त्वविद्याद्युपतापयोः ।
खगाद्रि[1]भेदयोः क्रौञ्च ऋषिभेदे ऽध्वरे क्रतुः ।
क्रूरो नृशंसे कुपिते भीषणे कर्कशे त्रिषु ।
क्षम[1]स्त्रिषु हिते योग्ये युक्ते शक्ते पटावपि ।
स्थालिकायां जलाधारविशेषे वह्निगर्तके ।
कुण्डं जारसुते कुण्डः कुशो दर्भे कुशं जले ।
क्षेत्रं तु दारकेदारपुण्यस्थानात्ममूर्तिषु ।
पुरे योनौ[1] समूहेऽथ मेदिन्यां च क्षये क्षितिः[2] ।
मत्सरे सुरभौ तिक्ते चोषणे[1] च कटुस्त्रिषु[2] ।
कोक ईहामृगे चक्रे कायो देहे[1] कदैवते ।
त्रिष्वन्तःकुक्षि कोष्ठोऽस्त्री कुसूलेऽन्तर्गृहे पदे ।
कूर्चमस्त्री कुशे पीठे भ्रूमध्यश्मश्रुणोरपि ।

---

3784 1. BD. मध्या° for मद्या°. 3785. 1. A. पारान्तरे for पाठान्तरे. 3786. 1. A. मध्य for मध्ये. 3787. 1. A. पर्यनु for पर्वसु. 3788. 1. BD गर्ह्ययोः for गर्हयोः 3790. 1. A. खगात्रि, D. खगादि for खगाद्रि. 3792. 1. A. क्षुमः for क्षमः. 3796. 1. A. धेनौ, BD. यानौ for योनौ; 2. AB. क्षतौ for क्षितौ. 3797. 1. A. चूषणे for चोषणे; 2. A. करत्रिषु for कटुस्त्रिषु. 3798. 1. A. हृहैकदैवते for देहे कदैवते.

कचः[1] केशे जीवपुत्रे कृष्णो नीलेऽनले हरौ ।
व्यासेऽर्जुने च कृष्णा तु पिप्पली द्रुपदात्मजा ।
कक्ष्या काञ्च्यां वरत्रायां कच्छवेश्मप्रकोष्ठयोः ।
काष्ठोत्कर्षौ हरित् सीमा कान्तिः शोभाभिकामयोः ।
क्ष्वेला स्त्री सिंहनादे ना विषवेणुशलाकयोः ।
विलेखप्राज्ञयोः पुंसि कृष्टिराकर्षणे स्त्रियाम् ।
ज्ञाने शिल्पे वित्तवृद्धौ काले चन्द्रांशके कला ।
महाभूतेष्विन्द्रियेषु कलनेऽवयवांशयोः ।
किष्कुर्द्वयोर्वितस्तौ स्यात् सप्रकोष्ठकरे नरि ।
क्रिया कर्मणि पूजायां करणे संप्रधारणे ।
शिक्षायां निष्कृतौ[1] चेष्टाचिकित्सोपाययुक्तिषु ।
आरम्भे[1] कोटिरश्र्यग्रप्रकर्षावधिसीमसु ।
खगोऽर्के विहगे वायौ तारके सुरमेघयोः ।
गर्दभे रक्षसि खरः खरुः पुंसि स्मरे हरे ।
गुणो[1] मौर्व्यामप्रधाने नाम्नि सत्त्वादिशौर्ययोः ।
शब्दार्थवृत्ति[1]माल्येषु [2]तन्तुरश्मीन्द्रियेषु च ।
पर्वतोपलयोर्ग्रावा[1] गणः प्रमथसंघयोः ।
उपराग उपादाने सत्त्वे सूर्यादिके ग्रहः ।

---

3801. 1. B. काचः for कचः. 3811. 1. AB. निक्रुतौ for निष्कृतौ. 3812. 1. B. आरम्भः, D. आरम्भो for आरम्भे. 3815. 1. A. गुणे for गुणः. 3816. 1. BD. शब्दार्थावृत्ति for शब्दार्थवृत्ति; 2. BD. तन्त्री for तन्तु. 3817. 1. A. पर्वतोपलयोर्ग्राह for पर्वतोपलयोर्ग्रावा.

शास्त्रे श्लोके श्रुतौ[1] ग्रन्थो ग्रन्थिः परुषि बन्धने ।
गर्भस्तु कुक्षौ कुक्षिस्थजन्तौ पनसकण्टके ।
अभ्यन्तरेऽपवरके सुते केशान्तरस्रजि ।
गोत्रं नाम्नि कुले पुंसि शैले स्त्री भुवि गोगणे ।
उपदेष्टरि मन्त्रादेः पित्रादौ गीष्पतौ गुरुः ।
मात्रादौ स्त्री बृहत्ख्यातदुर्जरालघुषु त्रिषु ।
द्वात्रिंशदक्षरश्लोके ग्रन्थः शास्त्रे श्रुतावपि ।
भोजने कवले [1]ग्रासो गन्धो यशसि सौरभे ।
व्यूहे [1]स्तम्बे गदे गुल्मो गदः[2] कृष्णानुजे रुजि ।
गण्डः कपोले पाषाणे गुहः स्कन्दे गुहा दरी ।
मुद्गरेऽयोघने मेघे घनः कर्पूरभूरुहे ।
स एव संहते सान्द्रे संघाते कठिने त्रिषु ।
घनं कांस्यादिके वाद्ये [1]लयसाम्ये भृशार्थके ।
घोष आभीरपल्ल्यां [1]स्याज्जालिन्यां च ध्वनौ विषे ।
अदने हरिते घासो घृणिर्ज्वालांशुवीचिषु ।
चन्द्रः शशिनि कर्पूरे तरौ हेम्नि नपुंसके ।
चक्री दर्वीकरे विष्णौ कुलाके छत्रवत्यपि ।
प्रचारे प्रणिधौ चारश्चीनो देशे मृगान्तरे ।
आलेख्याश्चर्ययोश्चित्रं चिह्नमङ्के ध्वजेऽपि च ।

---

3819. 1. D. श्रुते for श्रुतौ. 3826. 1. A. ग्रासे for ग्रासः. 3827. 1. AD. स्तम्भे for स्तम्बे; 2. BD. गदं for गदः. 3831. 1. A. लयः for लय. 3832. 1. B. स्यान्मालिन्यां, D. स्याच्चालिन्यां for स्याज्जालिन्यां.

स्तुतिवादे चटुश्चाटुरुभौ पशुपिचण्डके ।
चोलः कूर्पासके देशे चोरौ मशकतस्करौ ।
पुंनपुंसकयोर्वस्त्रे चीरश्चीरी तु [1]झल्लिका ।
चक्रं राष्ट्रजलावर्तसैन्यच्छद्मसु संहतौ ।
रथाङ्गे मण्डले वृत्ते संसारायुधभेदयोः ।
चूर्णि[1]र्ग्रन्थे कपर्दे च चर्चा चार्चिक्यचिन्तयोः ।
पाठे च चञ्चुरेरण्डे पुंसि पक्ष्यङ्गके स्त्रियाम् ।
छदः[1] पत्त्रे पलाशे च च्छन्दोऽभिप्रायवाञ्छयोः ।
कान्त्यनातपयोश्छाया प्रतिबिम्बार्कभार्ययोः ।
छन्दः पद्यश्रूतीच्छासु च्छद्म सद्मनि कैतवे ।
छिद्रं तु रन्ध्रावसराप[1]देशेष्वथ संहतौ ।
गवाक्षानाययोर्जालं क्षारके कपटे गणे ।
जरठे देशभेदे च जीनो[1] बुद्धार्हतोर्जिनः
प्राणि[1]नि त्रिषु जीवः स्यात् पुंसि जन्तौ बृहस्पतौ ।
स्त्री मौर्व्यामथ जन्तुः स्यात् प्राणिनि क्षत्रियान्तरे ।
जम्बीरे दैत्यभेदे च जम्भो भूतान्तरेऽपि च ।
ज्येष्ठा त्वलक्ष्मीर्नक्षत्र[1]ज्यायसी गृहगो[2]लिका ।
जातिर्जन्मनि मालत्यां सामान्ये ब्राह्मणादिके ।

---

3840. 1. BD. झिल्लिका for झल्लिका. 3843. 1. A. चूर्णी for चूर्णिः. 3845. 1. B. छन्दः for छदः. 3848. 1. B. °सरोप° for °सराप°. 3850. 1. AB. जिनः for जीनः. 3854. 1. A. नक्षत्रं ज्यायसि; 2. AD. गौलिका for गोलिका.

झषो[1] मीने च मकरे झ[2]म्पाश्वादिगतौ गते ।
प्रमाणगर्वयोष्टङ्को मृगे पाषाणदारणे ।
डिम्भः स्त्रीह्नि खगापत्ये ढक्कावाद्ये सरित्यपि ।
द्युतद्क्षिण तद्क्षिण च त्वष्टा तालस्तु नरके द्रुमे ।
द्वारबन्धनयन्त्रे च वाद्यभेदे विलम्बिते ।
कुञ्चिकायां [1]च तारस्तु मुक्ताशुद्धा[2]वुडौ न ना ।
इङ्मध्यरज्जुसुग्रीवजायासु स्त्री त्रिषूज्ज्वले ।
तन्त्रं स्यादौषधे [1]शास्त्रराष्ट्रचिन्तानवाम्बरे ।
परि[1]च्छदे तन्तुवाये प्रयोगे क्रतुकर्मणाम् ।
तीर्थं मन्त्राद्युपाध्यायशास्त्रेष्वम्भसि पावने ।
पात्रोपायावतारेषु स्त्रीपुष्पे योनियज्ञयोः ।
तेजः पराक्रमे प्राणे वर्चस्यर्चिषि तेजसि ।
धर्मेऽग्नौ नवनीते च तल्पं शयनजाययोः ।
रत्नदोषे भये त्रासस्तनुः स्त्री त्व[1]क्शरीरयोः
त्रिष्वल्पे च कृशे चाथ तमो राहुस्तमः [1]शुचि ।
ध्वान्ते पापे गुणेऽज्ञाने मोहे तीक्ष्णं तु शस्त्रके ।
त्रिषु क्रूरोष्णशातेषु तिग्म[1]स्तीव्रोष्णयोस्त्रिषु ।

3856. 1. A. om. 1. 3851; 2. D. जम्पा for झम्पा. 3861. 1. A. तु for च; 2. A पुटौ, D. वुढौ for °वुडौ. 3863. 1. BD. शास्त्रे for शास्त्र. 3864. 1. BD. परिच्छेदे for परिच्छदे. 3869. 1. A. त्वाच्छरीरयोः for त्वक्शरीरयोः. 3870. 1. AD. शुचिः for शुचि. 3872 1. A. त्रीप्रोष्ण° BD. त्रीव्रोष्ण° for तीव्रोष्ण°.

दण्डः [1]सैन्ये दमे[2] यष्ट्यां मेढ्रे[3] पार्श्वचरे रवेः ।
वने वनानले दावदवौ दन्तस्तु भूभृताम् ।
कटके स्थूलपाषाणे रदनेभविषाणयोः ।
जायाभावे तु दन्ता स्त्री देशो[1] नीवृत्प्रदानयोः[2] ।
यौतकादिधने दाने दायो द्युम्ने च पैतृके ।
द्रोणं तु कार्मुके द्रोणो वृश्चिके जलवायसे ।
मानभेदे पितर्यश्वत्थाम्नो गुल्मान्तरेऽपि च ।
स्याद्गुणेतरवाताद्योर्दोष एनसि दुर्विधौ ।
अव्यये दरमल्पार्थे दरः शङ्खे भये बिले ।
दुर्गा तु पार्वती दुर्गो राष्ट्रे दुर्गं वने पुरे ।
दुर्गमे त्रिषु दंष्ट्री तु शार्दूले मूषिके किटौ ।
सदंष्ट्रपन्नगे ग्राहे दानं हस्तिमदेऽपि च ।
द्वन्द्वं वसन्तग्रीष्मादिमिथुने कलहे युगे ।
दृष्टिर्दर्शन[1]धीदृक्षु [2]दाम प्रग्रहमाल्ययोः ।
धर्मो न्याययमाचाराहिंसावैदिककर्मसु ।
साम्यस्वभावसुकृतेष्वस्त्री धर्मं तु कार्मुके ।
धातुर्भ्वादिशब्दादिगैरिकादित्वगादिषु[1] ।
चक्षुरादिपृथिव्यादिहेमादिषु च रैतसि ।

---

3873. 1. A. सोमे for सैन्ये; 2. B. यमे for दमे; 3 A. नेध्रे for मेढ्रे. 3876. 1. BD. देशे for देशः; 2. A. प्रधानयोः for प्रदानयोः. 3886. 1. A. दृष्टिर्दर्शनदिद्रक्षु; B. दृष्टिर्दर्शनदीधिक्षु; D. दृष्टिर्दर्शनदीधिक्ष्म for 3886a; 2. A. दाम प्रहरदुतुल्ययोः for 3886b. 3889. 1. A om. ll. 3889—3892.

मरुर्धन्वा धनुर्धन्व[1] धवः पत्यौ द्रुमान्तरे ।
धृतिः सौख्ये धारणे च धाता ब्रह्मणि पोषके ।
धारा सलिलसंतत्यां[1] सैन्याग्रे वाजिनां गतौ ।
अस्त्राग्रेऽप्यथ धात्री भूरुपमातामलक्यपि ।
नगः[1] शिलोच्चये वृक्षे नाकः स्वर्गान्तरिक्षयोः ।
नागः सर्पे गजे ग्राहे नरोऽर्जुनमनुष्ययोः ।
नग्नो रुद्रो जिनोऽवासा वेदत्यागी निरग्निकः ।
नाशस्त्वदर्शने मृत्यौ परिध्वंसे पलायने ।
हेम्न्युरोभूषणे[1] कर्षे साष्टकर्षशते पले ।
दीनारेऽपि च निष्कोऽस्त्री नेमिः सीमाव्यवस्थयोः ।
देशक्रिमी[1]क्षुतिलकातिमुक्तेषु विशेषके ।
पुण्ड्रः पिण्डस्तु वपुषि गुडे वृत्ते सुसंहते ।
पक्षोऽर्धमासे गरुति पार्श्वद्वारेऽन्तिके बले ।
पार्श्वे चुल्लिबिले[1] भित्तौ सहाये साध्यवश्ययोः ।
पणस्तु[1] कार्षिके द्यूते ग्लहे मूल्ये भृतौ धने ।
स्यान्मानव्यवहारा[1]त्तविक्रय[2]द्रव्यमुष्टिषु[3] ।
प्रायो वयसि बाहुल्ये तुल्यानशनमृत्युषु ।

---

3891. 1. B. धन्वा for धन्व. 3893. 1. B. संतत्योः for संतत्यां. 3895. 1 A. नागः for नगः. 3899. 1. A. हेम्नूरौ भूषणे कर्षः for 389ˆa. 3901. 1. A. कृमि, BD. क्रमि for क्रिमि. 3904. 1. B. चिल्लुबिलो, A. चुल्लीबले for चिल्लिबिले. 3905. 1. A. वर्णस्तु for पणस्तु. 3906. 1. BD. व्यवहारे for व्यवहारा°; 2. B. बिक्रियादिव्य, D. बिक्रयादिव्य for विक्रयद्रव्य; 3. A मिष्टिषु for मुष्टिषु.

पतिः स्वामिनि पत्यौ च पत्री श्येनपृषत्कयोः ।
प्राणस्तु जीविते[1] जीवे जीवात्मपरमात्मनोः ।
अन्तर्याम्यन्तःकरणवायुभेदबलेषु च ।
पोतः प्रवहणे[1] डिम्भे[2] पाकः पचनडिम्भयोः[3] ।
कालस्य चावधौ प्रैषः प्रेषणे[1] मर्दनेऽपि च ।
पद्मोऽस्त्री पङ्कजे ना तु निधौ व्यूहेऽहिपुंगवे ।
स्त्री श्रियामौषधे षण्डः[1] संख्यायां गजबिन्दुषु ।
अष्टकायां परं[1] दूरे भृशे मुख्यान्ययोः पुमान् ।
पादग्रन्थेरधः पार्ष्णि पुमांस्त्र्युत्तमयोषिति ।
पुङ्खः श्येने [1]शराङ्गे च [2]पविर्वज्रसमीरयोः ।
पशुरङ्गगवाद्योः स्यात् परोऽरिपरमात्मनोः ।
पिण्डिर्ना तैलकल्के स्त्री रथनाभौ च पिण्डिका[1] ।
पयः पाथसि च क्षीरे पङ्कोऽस्त्री कर्दमांहसोः ।
पलाशे[1] वाहनं पत्रं छुरिकायां गरुत्यपि ।
पात्रं योग्ये भाजने च वित्ते[1] कूलद्वयान्तरे ।
पाने स्त्री पीतिरश्वे ना पोत्रं लाङ्गलदंष्ट्रिणोः[1] ।
मुखाग्रदेशेऽथ पलं मांसे कर्षचतुष्टये ।

---

3909. 1. BD. जीवने for जीविते 3911. 1. B. प्रवाहणे for प्रवहणे; 2. D. डिम्बे for डिम्भे; 3. AD. डिम्बयोः for डिम्भयोः. 3912. 1. A. पेषणे for प्रेषणे. 3914. 1. BD. षण्डे for षण्डः. 3915. 1. A. पुरं for परं. 3917. 1. BD. शराङ्गेषु for शराङ्गे च; 2. A. परिः for पविः. 3919. 1. BD. पिण्डिका for विष्टके. 3921. 1. A. पलाले for पलाशे. 3922. 1 A. वृत्ते for वित्ते. 3923 .BD. दंष्ट्रयोः for दंष्ट्रिणोः.

पर्व पञ्चदशीग्रन्थ्योः प्रस्तावे[1] विषुवादिके ।
पार्श्वमस्त्री समीपे च[1] प्रजा तु जनपुत्रयोः ।
पुण्यं धर्मे शुभे शुद्धे पूर्वः प्राच्यादिकेऽर्थवत् ।
पूर्वजेषु नृभूम्नोः[1] स्यात् प्रस्थोऽस्त्री सानुमानयोः ।
फालो[1] निरीषके स्फोटे श्वेतार्के दाडिमे[2] फले ।
भोगनिष्पत्तिलाभेषु बीजे फाले धने फलम् ।
राजदेये बलिर्दैत्यभेदे पूजोपहारयोः ।
कपिले त्रिषु बभ्रुर्ना नकुले केशवे मुनौ ।
प्रतिबिम्बे प्रतिकृतौ बिम्बोऽस्त्री मण्डले समे ।
बाणः शरे बलिसुते वृक्षभेदे तु वा स्त्रियाम् ।
आधि[1]बन्धनयोर्बन्धो बन्धुर्बान्धवकामयोः ।
बलो रामे दैत्यभेदे काके[1] बलवति त्रिषु ।
सहायस्थौल्यसैन्येषु शक्तौ क्लीबे बलौलौषधे ।
जन्मसंसारसात्तासु भद्रे भूतपतौ भवः ।
भगो रुद्रे मुनौ[1] सूर्ये धर्मे प्राज्ञे तपस्यपि ।
वैराग्यैश्वर्यकान्तीच्छायत्नवीर्ययशःस्वपि ।
भोगो[1] वेश्याभृतौ[2] राज्ये सौख्येऽर्थे पालने रतौ ।
विहारे व्यवहारे च फणिनः फणदेहयोः ।

---

3925 BD. प्रास्तावे for प्रस्तावे. 3926. 1. A. समीपेऽथ for समीपे च. 3928 1. BD नृभूम्योः for नृभूम्नोः. 3929. 1. BD. फाले for फालः; 2. B. डाडिमे for दाडिमे. 3935. 1. AD. आदि for आधि. 3936. 1. BD. काले for काके. 3939. 1. A. मनौ for मुनौ. 3941. 1. A. भागः for भोगः; 2. A. भृते for भृतौ.

भूतं खादौ[1] च जन्तौ च न स्त्रियां गणसत्त्वयोः ।
भार्गोऽशे भागधेये च भानुः किरणभास्करौ ।
भावश्चेष्टाक्रियालीलासत्ताभिप्रायजन्तुषु ।
आत्मभावेन्द्रियज्ञानमनोविकृतिभूतिषु ।
द्रव्यमात्ररसोत्पत्तिस्वभावात्मसु चेङ्गिते[1] ।
गजभेदे वृषे भद्रः शुभे क्लीब उरौ त्रिषु ।
भङ्गः [1]पराजये छेदे [2]तरङ्गे चावखण्डने ।
भङ्गा तु यव[1]भेदे स्याद् भीमौ रुद्रवृकोदरौ ।
नरकाङ्गारकौ भौमौ भेकौ[1] वर्षाभ्वि[2] कातरे[3] ।
मन्युः कोपेऽध्वरे[1] शोके मरुद्देवसमीरयोः ।
मन्दः शनौ सरोगेऽज्ञे निर्भाग्येऽल्पे[1]ऽपटौ त्रिषु ।
अजागलस्तने रत्ने[1]ऽलिञ्जरेऽपि मणिर्द्वयोः ।
मौलिस्तु संयते केशे चूडायां मकुटे द्वयोः ।
वाचंयमे वसिष्ठादौ बुद्धे[1] वृक्षे जिने मुनिः ।
मधुस्तु यादवे चैत्रे वसन्ते दानवान्तरे ।
वा पुंसि मद्ये[1] क्लीबे तु स्यात् क्षौद्रमकरन्दयोः ।

---

3943. 1. A खातौ. D. व्याधौ for खादौ. 3947. 1. D. om. 1. 3947. 3949. 1. A. पराजयः for पराजये; 2. A. तगे चावर्तखण्डने BD. तुरङ्गे चापखण्डने for 3949b. 3950. 1. BD. धवभेदे for यवभेदे. 3951. 1 D. भेके for भेकौ; 2. A. वर्षासिकातरे for वर्षा भ्वि कातरे; 3. BD. कान्तरे for कातरे. 3952. 1. A. ध्वजे for ऽध्वरे. 3953. 1. BD. delete अल्पे. 3954. 1. D. रक्ते for रत्ने. 3956. 1 BD. बुधे for बुद्धे. 3958. 1. ABD. मद्ये for मद्ये.

स्याद्राश्येलकयोर्मेषो मोहो वैचित्र्यमौर्ख्ययोः[1] ।
मरुर्धन्वनि देशे च मारस्तु मरणे स्मरे ।
माता ब्राह्म्याद्यकाराद्योरुमायां गवि मातरि ।
अक्षरावयवे माने प्रवृत्तौ [1]कर्णभूषणे ।
अंशे परिच्छदे मात्रा मात्रं कार्त्स्न्येऽवधारणे ।
मदो दाने स्मये मूलं शिफातारादिहेतुषु ।
मृगस्तु हरिणे सौम्ये नक्षत्रेऽन्वेषणे गजे ।
मार्गो मृगशिरोमासान्वेषणाध्वसु याचने ।
मुख्य[1]द्वाराभ्युपायेषु ताम्रे च वदने मुखम् ।
यमो यमलकीनाशसंयमेषु नियन्त्रणे[1] ।
यतिर्यतिनि पुंसि स्यात् कारसंयमोः स्त्रियाम् ।
ध्यानसंनहनोपाययुक्ति[1]विस्रब्धघातिषु ।
प्राप्तौ च संगतौ योगो यासो दुःस्पर्शयत्नयोः ।
गमने वर्तने यात्रा यानमश्वादिके गतौ ।
रसो रागे विषे वीर्ये[1] शृङ्गारादौ पराक्रमे ।
तक्तादौ[1] पारदे शब्दे रेतस्यास्वादने[2]ऽमृते ।
रतिः क्रीडाकामपत्न्योः रदो[1] दन्तविलेखयोः ।
अंशुप्रग्रहयोः रश्मी रणोऽस्त्री युधि ना स्वने

---

3959. I. BD. मुख्ययोः for मौर्ख्ययोः. 3962. I. A. कण्ठ for कर्ण. 3967. I. BD. मुख for मुख्य. 3968. I. A. निमन्त्रणे for नियन्त्रणे. 3970. I. BD. युक्त for युक्ति. 3973. I B. द्रव्ये for वीर्ये. 3974. I. B. रिक्तादौ for तिक्तादौ. 3975. I. D. रतौ for रदः.

चन्द्रक्षत्रिययोः राजा लताभेदे नृपे प्रभौ ।
रजः पांस्वार्तवाहःसु रहो [1]याभरहस्ययोः ।
रुचिः कन्तिस्पृहार्चिःषु[1] रीतिः स्थित्यारकूटयोः ।
रेणुर्मुनौ च पांसौ च रिष्टं नाशे शुभाशुभे ।
रागोऽलक्तेऽनुरागे च त्विषि[1] वर्णान्तरेऽरुणे ।
लेपने भोजने लेपो लोकः स्याद्भुवने जने[1] ।
लवो लेशे नृपे च्छेदे लङ्का पूर्भेदचिह्नयोः ।
लक्षं[1] शरव्ये[2] संख्यायां लघुस्त्रिषु मनोरमे ।
असार इष्टे क्षिप्रार्थेऽप्यगुरौ क्षुल्लकेऽपि च ।
लीला क्रीडा[1] विलासश्च लक्ष्म चिह्नवरिष्ठयोः ।
चिह्नमेहनयोर्लिङ्गं वेषे बुद्ध्यादिसंगतौ[1] ।
वंशः पृष्ठास्थ्नि नासोर्ध्वास्थ्नीक्षुभेदे कुले गणे ।
वेणौ वेश्मौर्ध्वकाष्ठे च खड्गांशे वाद्यभेदके ।
व्रजा गोष्ठाध्वनिवहा गोश्वासे[1] वाहने[2] वहः ।
विधुर्निशाकरे विष्णौ वाज्यश्वे सायके[1] खगे ।
वयः क्लीबे खगे प्राये वालः पुच्छे शिरोरुहे ।

---

3978. 1. B. राग, D याग for याभ. 3979. 1. BD. स्पृहार्चिःसु for स्पृहार्चिःषु. 3981. 1 A. विष for त्विषि. 3982. 1. A. जन्ते for जने. 3984. 1. A. लक्ष्यं for लक्षं; 2. A. शरव्यं for शरव्ये. 3986. 1. A. क्रिया for क्रीडा. 3987. 1. BD. संहतौ for संगतौ. 3990. 1. BD. गोश्वांसे for गोश्वासे; 2. A. पनसे, BD. वहने for वाहने. 3991. 1. B. °ऽन्वायके for सायके.

वीचिः [1]पङ्क्त्यूर्मिधारासु वीथिः पङ्क्तिः पद्व्यपि ।
विधाः प्रकारहस्त्यन्नविधानर्द्धिभृतिक्रियाः ।
व्युष्टिः फले समृद्धत्वे वेगः किंपाकरंहसोः ।
क्लीबे वारिजले स्त्री तु वारणग्रहणस्थले ।
वीर्यं पराक्रमे शुक्रे वृत्तिर्वर्तनजीवने ।
विधिर्ब्रह्मणि दैवे च विधाने कर्मकल्पयोः ।
वेणी तु देवताली स्यात् केशबन्धोऽम्बुसंततिः ।
वर्णो विप्रादिशुक्लाद्योर्व्रते[1] गीतिक्रमे कुथे ।
कीर्तौ स्तवेऽक्षरे त्वस्त्री [1]प्रकारालेपभाःसु[2] च ।
वीरोऽग्नौ तनये शूरे शक्रे स्कन्दकुबेरयोः ।
हरे राहौ च वर्चोऽर्चीरूपविड्भाःसु[1] तेजसि ।
वरो ना[1]वृतिजामात्रोर्देवताभ्यः समीप्सिते ।
त्रिषु प्राग्रहरे क्लीबे मनागिष्टेऽथ पन्नगे ।
दुष्टद्विपे श्वापदे च व्यालः पुंसि शठे त्रिषु ।
विश्वं जगति सर्वस्मिन् त्रिषु शुण्ठ्यामसौ न ना ।
मूषिके शुनके श्रेष्ठे वृषभे सुकृते वृषः ।
वार्ता वार्तिङ्गनोदन्तवाणिज्यादिषु वर्तने ।
निःसारारोग्ययोः क्लीबे वृत्तिमन्नीरुजोस्त्रिषु[1] ।

---

3993. 1. BD पत्यू for पङ्क्त्यू°. 3998. 1. A विधानक्रम for विधाने कर्म. 4000. 1. B. तेऽङ्क्षी, D.—ते, A. घृते for व्रते. 4001. 1. A. प्रकारो for प्रकारा; 2. A. भानु for भास्सु. 4003. 1. D. भासु for भास्सु. 4004. 1. A. प्रति for वृति. 4010. 1. A. नीरुघो जयः, BD. नीरुजोऽस्त्रियाम् for नीरुजोस्त्रिषु.

वृत्तं तु चरिते पद्ये त्रिष्वतीते च वर्तुले ।
वत्सस्तु तर्णके वर्षे पुत्रादौ कुटजे मुनौ ।
बाले च वक्षसि त्वस्त्री वृषोऽद्दिण सुरनायके ।
वासो गन्धे निवासे च वारः पर्यायसंघयोः ।
वसु क्लीबे धने तोये [1]योक्त्रांशुज्वलनेषु ना ।
वर्षाः प्रावृषि वर्षोऽस्त्री भारताद्यब्दवृष्टिषु ।
वाणी वाग्देवतावाचोर्वीतं [1]दुर्गजवाजिनोः ।
शङ्खो निधौ ललाटास्थ्नि नागे कम्बौ तु न स्त्रियाम् ।
शिवो महेश्वरे शङ्कौ पुमान् क्लीबे तु मङ्गले ।
शुद्धे त्रिषु शिवा क्रोष्टाभया शम्यामलक्युमा ।
वृत्रारौ कुटजे शक्रः शुको व्याससुते खगे ।
शङ्कुः पत्रसिराकीलमेहनेष्वायुधान्तरे ।
शेषोऽप्रधानेऽनन्ताख्ये सर्पराजे मधुद्विषः ।
अवतारान्तरेऽपत्ये त्रिष्वन्यत्रोपयुक्ततः ।
मालाक्षतादिदाने स्त्री शेषा [1]शुक्रोऽनले कवौ[2] ।
दक्षिणाग्नौ ज्येष्ठमासे क्लीबे [1]रुक्मेऽप्सु रेतसि ।
अक्षिरोगेऽथ शृङ्गोऽस्त्री पर्वताग्रप्रभुत्वयोः ।
क्रीडाम्बुयन्त्रे पश्वङ्गे शास्त्रं ग्रन्थनिदेशयोः[1] ।
शम्बस्तु लोहवलये दम्भोलौ मुसलाग्रके ।

---

4015. 1. B. वक्त्राम्बु, D. वक्त्रांशु for योक्त्रांशु. 4017. 1. B. दुर्गन्ध, D. तुर्गन्ध for दुर्गज. 4025. 1. A. शूकः for शुक्रः; 2. B. कलौ for कवौ. 4026. 1. BD. रुग्मे for रुक्मे. 4028. 1. A. निवेशयोः for निदेशयोः.

शीलं वृत्ते स्वभावे च शान्तिः प्रशममङ्गले ।
शष्पकर्दमयोः शादो[1] वेदश्रवणयोः श्रुतिः ।
श्लोकस्तु पद्ययशसोः शुण्डा मद्येभहस्तयोः ।
शब्दः कीर्तौ ध्वनौ वाक्ये श्रवणेऽन्तरगीतयोः ।
स्यादध्वदेयजामातृदेययोः शुल्कमस्त्रियाम् ।
शारिर्द्वयोः कुथे[1] द्यूते पर्याणे ना खगे स्त्रियाम् ।
शंसनेऽस्त्रायसोः शस्त्रं[1] श्यामा युवतिकन्ययोः ।
शुचिर्मासे जातवेदस्युपधाशुद्धमन्त्रिणि[1] ।
त्रिषु शुद्धे सिते[1] शाला मन्दिरस्कन्धशाखयोः ।
स्यात् त्रिष्वाकर्णिते क्लीबे शास्त्रावधृतयोः[1] श्रुतम्[2] ।
सर्गस्तु [1]निश्चयेऽध्याये स्वभावोत्साहसृष्टिषु ।
स्त्री सिन्धुरापगायां ना देशभेदसमुद्रयोः ।
संधिः [1]सुरुङ्गा[2]नाड्याङ्गरन्ध्रसंश्लेषयोनिषु ।
सालोऽश्वकर्णे प्राकारे तरुमात्रे झषान्तरे ।
सत्तायां प्रकृतौ प्राणे पिशाचादौ पराक्रमे ।
द्रव्ये बलेऽन्तःकरणे व्यवसायात्मभावयोः ।
स्वभावे निर्मलज्ञाने सत्त्वमस्त्री तु जन्तुषु ।
सत्यं तु शपथे तथ्ये परमार्थेऽभिधेयवत् ।

---

4031. 1. D. शाकः for शादः. 4035. 1. A. कुषे for कुथे. 4036. 1. BD शास्त्रं for शस्त्रं. 4037. 1. BD. मन्त्रिषु for मन्त्रिणि. 4038. 1. AD. शिते for सिते. 4039. 1. A. °वध्यतयोः for °वधूतयोः; 2. BD. शतम् for श्रुतम्. 4040. 1. A, निश्चया° for निश्चये. 4042. 1. A. सुरुङ्ग for सुरुङ्गा; 2. B. नाद्राङ्ग, D. नाद्रीङ्ग for नाड्याङ्ग.

स्वरोऽकाराद्युदात्तादिषड्जादिषु जनस्वने ।
स्वामी षडानने पत्यौ स्वरुर्यूपांशवज्रयोः ।
स्याज्ज्ञाड्यस्थूणथोः स्तम्भः सुतः सोमरसेऽपि च ।
मृतिव्यवस्थयोः संस्था सभा तु द्यूतसंसदोः ।
संवित् संकेतसमयप्रतिज्ञाचारनामसु ।
संज्ञा[1]संभाषणज्ञानक्रियाकारेषु तोषणे ।
बले स्थिरांशे सारो ना धने न स्त्री वरेऽर्थवत् ।
प्रतिज्ञानेऽवधौ संधा ज्ञानमर्यादयोः स्थितिः ।
संज्ञा नाम्न्यर्कभार्यायां ज्ञाने हस्तादिसूचने ।
सत्रं यज्ञे सदा दाने [1]वनेऽन्नार्पणवेश्मनि ।
हंसोऽर्के विहगे विष्णौ जीवे श्वेतवृषे स्मरे ।
निःसपत्ननृपे भित्तौ हीरः पन्नगसिंहयोः ।
विष्णुसिंहार्कचन्द्रेन्द्रयमानिलशुकादिषु ।
कपि[1]भेकांशुवाहेषु हरिर्ना पिङ्गले त्रिषु ।
हव आह्वानमखयोर्हेतुः कारणजन्मनोः ।
हरिदर्कहये वर्णे पुंसि स्यात् ककुभि स्त्रियाम् ।
हेतिः स्त्रीपुंसयोर्ज्वाले[1] किरणायुधयोरपि ।

इति वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे-
ऽनेकार्थाधिकारे द्व्यक्षराध्यायः ॥

——:❀:——

4053. 1. A. संज्ञायां भाषण for संज्ञासंभाषण. 4057. 1. BD. वने ना पणवेश्मनि for 4057b. 4061. 1. B. भेकाशु for भेकांशु. 4064. 1. B. ज्वाला for ज्वाले.

# २७

## त्र्यक्षराध्यायः

अर्जुनः फल्गुने वृक्षे मातुरेकसुते सिते ।
सहस्रबाहौ दृग्रोगे क्लीबे तृणसुवर्णयोः ।
अर्जुनी गवि नद्यां स्यादनूरौ भास्करेऽरुणः ।
अनन्ता भूरनन्तं खमनन्तो हरिशेषयोः ।
केयूरे त्वङ्गदं क्लीबे पुंसि बालिन[1] आत्मजे ।
अञ्जनं कज्जले ना तु दिग्गजे कपिपुङ्गवे ।
स्त्री कलत्रे केसरिणो मालिन्ये वाच्यलिङ्गकम् ।
अत्ययोऽतिक्रमे दण्डे मरणे कृच्छ्रदोषयोः ।
अरिष्टं सूतिकागारे[1] मद्ये[2] ताम्रे[3] शुभाशुभे ।
कालशेये मृत्युचिह्ने काकनिम्बासुरेषु ना ।
अमृतामलकी पथ्या गुलूची[1] गोस्तनी सुरा ।
अमृतं हेम्नि देवान्ने यज्ञशेषे रसायने ।
अयाचिते जले मोक्षे त्रिषु स्यात् स्वादुनित्ययोः ।
अप्पती[1] वरुणाम्भोधी अगस्त्यौ[2] मुनिपादपौ ।
अन्तरं परिधानीयबाह्यस्वीयेषु वाच्यवत् ।
क्लीबेऽवसरतादर्थ्यमध्यान्तर्धान्तरात्मसु ।

---

4069. 1. A. वालिनः for बालिनः. 4073. 1. BD. सूतिकागेहे for सूतिकागारे; 2. A. मध्ये for मद्ये; 3. BD. कामे for ताम्रे. 4075. 1. A. गलूची for गुलूची. 4078. 1. B. अप्पतिर्वरुणा° for आप्पती वरुणा°; 2. A. अगस्त्यो for अगस्त्यौ.

अवकाशेऽवधौ भेदे विनार्थच्छिद्रयोरपि ।
अपानः पुंसि देहस्थवायौ पायौ नपुंसके ।
ब्रह्मण्यव्यक्तमस्पष्टे त्रिषु स्यात् [1]सौम्यमन्दयोः ।
अलसोऽथाङ्गजः कामे प्राणादौ तनये रुजि ।
अभिख्या त्विड्यशोनामस्वयनं नरके पथि ।
सूर्योदग्दक्षिणे[1] यानेऽप्यलीकं [2]त्वप्रियानृते ।
अण्डजो ब्रह्मणि व्याले गोधायां सरटे[1] खगे ।
अशनिर्वज्र[1]तटितोरनीकोऽस्त्री चमूयुधोः ।
अक्षरः पुरुषे[1] ब्रह्मवर्णनिःश्रेयसेऽक्षरम् ।
आलोकौ [1]दर्शनद्योतावाहवौ समराध्वरौ ।
आम्नायः संप्रदायेऽपि वेदाध्ययनयोरपि ।
आकार इङ्गिताकृत्योरागमः श्रुतिशास्त्रयोः ।
आसारोऽतिमहावृष्टौ प्रसारे[1] च सुहृद्बले ।
तपोवने मठे ब्रह्मचर्यादावाश्रमोऽस्त्रियाम् ।
आशयो हृदये ज्ञानेऽभिप्राये कौतुकेऽपि च ।
प्रभावागामिसमयदैर्घ्येष्वायतिरागमे ।
आसनं वारणस्कन्धे आस्पदं स्थानकृत्ययोः ।
स्तम्भमात्रेऽपि चालानमाशंसा स्तववाञ्छयोः ।

---

4083. 1. A. सभ्य for सौम्य. 4086. 1. A. सूर्योदग्धक्षीणधाने for 4086a; 2. A. च for त्व° 4087. 1. A. सुमटे for सरटे. 4088. 1. B. तडितो° for तटितो°. 4089. 1. BD. परुषे for पुरुषे. 4090. 1. A. दर्शनोद्योता° for दर्शनद्योता°. 4093. 1. B. प्रहारे for प्रसारे.

आतङ्को भीतिरुक्तापेष्वामोदो मुत्सुगन्धयोः ।
श्रोण्यां चारोह आवापो न्यास[1] आवाल[2]भूषयोः ।
तदात्वे पात आपात आशुगोऽर्केषुवायुषु ।
आयोगो व्यापृतौ गन्धमाल्योपहरणेऽपि च ।
भक्षणेऽन्धसि चाहार आघातः [1]सीमघातयोः ।
आक्रन्दः क्रन्दने घोरसमरे निन्दनेऽपि च ।
आलवालेऽधिकरणे स्यादाधारोऽम्बुबन्धने ।
आकर्षः शारिफलकद्यूताकृष्टिषु पाशके[1] ।
आनर्तो देशभेदे स्यान्नृत्तवेश्मनि संयुगे ।
आशीरः पावके सूर्ये स्यात् क्षीरविकृतावपि ।
इषीकास्त्रे तृणेऽपि स्यादिल्वलः पुंसि दानवे ।
तारकास्विल्वला स्त्रीत्व ईश्वरोऽधिपतौ[1] हरे[2] ।
उदान[1] उदरावर्ते फणिवायुप्रभेदयोः ।
उपाधिर्धर्मचिन्तायां कुटुम्बव्यापृतावपि ।
उदर्क उत्तरे काले स्यादुत्तरफलेऽपि च ।
उपला स्त्री दृषत्पुत्रे मणिपाषाणयोः पुमान् ।
ऊर्णायुरूर्णनाभौ स्यान्मेषे तल्लोमकम्बले ।
ऋषभो गोवृषे श्रोत्ररन्ध्रे श्रेष्ठे स्वरे मुनौ[1] ।

---

4100. 1. A. स्याद् for न्यास; 2. BD आवास for आवाल. 4103. 1. A. सम for सीम. 4106. 1. BD. वाशरे for पाशके. 4110. 1. BD. भूपतौ for °ऽधिपतौ; 2. A. हरौ for हरे. 4111. 1. BD. स्यादुदान उदावर्त for 4111a. 4116. 1. A. मनौ for मुनौ.

कलङ्कोऽङ्केऽपवादे च कलिङ्गः खगदेशयोः ।
करेणुर्ना गजे स्त्री तु करिण्यामथ कञ्चुकः ।
वारबाणेऽहिनिर्मोके कर्णिका कर्णभूषणे ।
करिहस्ताङ्गुलौ पद्मबीजे[1] कमलमम्बुजे ।
सलिले करवालादेर्हेमाद्यैश्चित्रिताजिने ।
कमला श्रीः कपर्दस्तु जटाजूटे वराटके ।
क्षुद्रशत्रौ द्रुमाङ्गे च रोमहर्षे च कण्टकः ।
भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रियाम् ।
गुग्गुलूलूकशक्रर्षिव्यालग्राहिषु[1] कौशिकः ।
कृतान्तो दैवसिद्धान्तयमाकुशलकर्मसु ।
कलापो भूषणे काञ्च्यां समूहे बर्हतूणयोः ।
कमण्डलौ च दाडिम्यां[1] करको भूम्नि तु स्त्रियाम् ।
वर्षोपलेषु करकाः कलत्रं श्रोणिभार्ययोः ।
श्वभ्रे क्लीबस्तुषाग्नौ ना कुकूलमथ कौतुकम् ।
कुतूहले हस्तसूत्रे कल्याणं हेम्नि मङ्गले ।
कुण्डलं कर्णभूषायां चक्रे पन्नगवेष्टने ।
अस्त्री वृषाङ्गे प्राधान्ये ककुदो राजलक्षणे ।
पुंसीक्षुभेदे कान्तारः क्लीबे वनदुरध्वनोः ।
कदर्ये त्रिषु कीनाशः कृष्यध्यक्षे यमे नरि ।
काके च करिगण्डे च करटः कुहरं रते ।

---

4120. 1. A. धर्मबीजे for पद्मबीजे. 4125. 1. A. ग्राहेषु for ग्राहिषु.
4128. 1. B. डाडिम्यां for दाडिम्य .

विवरे[1] शैलदर्यां च कूपीटमुदरेऽम्भसि ।
दिग्गजे कुमुदः शाखामृगपन्नगमुख्ययोः ।
कैरवे कुमुदं क्लीबे कदली मृगरम्भयोः ।
कूर्चिका क्षीरविकृतौ सूचीतूलिकयोरपि ।
कबन्धोऽस्त्र्यपमूर्ध्न्यङ्गे षण्डेऽम्भस्याशरे पुमान् ।
कादम्बः सायके हंसे कदम्बः शरभूरुहोः ।
कृतौ विवरणे श्लोके यातनायां च कारिका ।
कालिका घनजालेऽपि कमठो मुनिकूर्मयोः ।
कैतवं कपटे द्यूते कारणं हेतुजन्मनोः ।
बधादौ कारणे[1] काये[2] साधने रतिबन्धने ।
नाट्यभेदेन्द्रियध्यानस्पृष्टाद्युच्चारणेषु च ।
गीतके कर्मणि ज्ञाने करणं द्वादशस्वपि ।
काञ्चनं हेम्नि वृक्षे तु काञ्चनः काञ्चनी निशा ।
क्वाथे कुथे कषायोऽस्त्री निर्यासे सौरभे रसे ।
अस्त्री कशिपु वस्त्रेऽन्ने शय्यायां तद्द्वयेऽपि[1] च ।
कुमारः षण्मुखे बाले युवराजे सितद्रुमे ।
कुमारी चण्डिका कन्या सहा सुदुहितर्यपि ।
कुतपो भागिनेयार्कगोतिथिब्राह्मणेषु ना ।
अस्त्री त्वह्नोऽष्टमे भागे कर्बुरः पुंसि राक्षसे ।

---

4136. 1. A. पीवरे for विवरे. 4146. 1. A. करणे for कारणे; 2 A. कामसाधने for काये साधने. 4151. 1. BD. तद्विधेऽपि for तद्द्वयेऽपि.

वर्णे च कर्बुरं हेम्नि करीरस्तु[1] घटे पुमान् ।
वंशाङ्कुरे हस्तिदन्तमूलभागेऽपि न स्त्रियाम् ।
यज्ञायुधे कर्परे च कपालं पुंनपुंसकम् ।
निश्चिते[1] केवलं क्लीबे वाच्यवत्त्वेककृत्स्नयोः ।
कुशलं मङ्गले पुण्ये निपुणक्षमयोस्त्रिषु ।
कुहनो मूषिके दम्भे कुद्दालो युगपत्रके ।
खनित्रभेदे सिंहादिस्कन्धरोम्णि तु केसरः ।
बकुलेऽस्त्री तु किञ्जल्के कपिलो मुनिवर्णयोः ।
कटीरं[1] कन्दरे कट्यां कुशिको मुनिवृक्षयोः ।
कुम्भीरस्तस्करे नक्रे क्षवथुः क्षवकासयोः[1] ।
कलहो द्वन्द्वरणयोः कर्परोऽग्निकपालयोः ।
क्षारको मत्स्यपक्ष्यादिपिटके पुष्पजालके ।
कुररः शैलखगयोः कुन्नानं कुण्डशिक्ययोः ।
खिङ्खिरो वरुणे क्रोष्टौ खेचरोऽर्कादिवातयोः ।
पूगे तदीयनिर्यासे खपुरः पूगवेष्टके ।
खनको मूषिके[1] कोले ग्रामणीर्नापितेऽपि च ।
गृहिणी[1] देहली जाया काञ्चिकं[2] गृहकारिका ।
गणिका[1] करिणी[2] वेश्या यूथिका कूटकारिका[3] ।

---

4156. 1. A: हरिरस्तु for करीरस्तु. 4159. 1. BD. निश्चितं for निश्चिते. 4164. 1. A. कटिरं, B. कटिरः for कटीरं. 4165. 1. A. क्लीब for क्षव. 4171. 1. A. मूषके for मूषिके. 4172. 1. A. ग्रहणी, D. ग्रहिणी for गृहिणी; 2. B. काञ्चितं for काञ्चिकं. 4173. 1. A. गणे काकरिणी वेश्या for 4173a; 2. BD. कारिका for कारिणी; BD. हारिका for कारिका.

गोपतिर्वृषभे प्राज्ञे सूर्ये भूभृति वज्रिणि ।
मत्तेभे गर्जितः पुंसि क्लीबे मेघेभनादयोः[1] ।
गण्डपूर्तौ तु गण्डूषः[1] प्रसृते[2] करिपुष्करे ।
गन्धर्वो गायके सप्तौ देवयोनौ मृगान्तरे ।
चामीकरे तु गाङ्गेयं गाङ्गेयः स्कन्दभीष्मयोः ।
गरुत्मान् विहगे तार्क्ष्ये घटिका नाडिका घटः ।
चञ्चलो[1] वाच्यलिङ्गे स्याच्चरले तडिति[2] स्त्रियाम् ।
चपले त्रिषु केशे[1] ना चिकुरश्चपलो रसे ।
तडिति[1] स्त्री द्रुते[2] क्लीब[3]श्चत्वरस्तु[4] चतुष्पथे[5] ।
स्थण्डिलाङ्गणयोः क्लीबे चतुरः कुशलेऽर्थवत् ।
चतुरं गजशालायां चतुरा स्त्री मृगान्तरे ।
जगती भुवने[1] भूमौ लताच्छन्दोविशेषयोः ।
जगलो मोदके मद्ये जरठः कठिनेऽपि च ।
श्रमणे जीवयितरि वृद्धि[1]जीविनि जीवकः ।
जर्जरस्त्रिषु जीर्णेऽपि जनकोऽपि नृपान्तरे ।
अल्पाम्बुद्रुगिरौ देशे देशभेदेऽपि जाङ्गलः ।

---

4175. 1. A. दानयोः for नादयोः. 4176. 1. A. गण्डूषं for गण्डूषः; 2. A. प्रस्रुते करिपुष्पके for 4176b. 4180. 1. BD. चञ्चले for चञ्चलः; 2 B. तटिति for तडिति. 4181. 1. B. केशो for केशे. 4182. 1. AD. तटिति for तडिति; 2 A. द्यूते, BD. द्रुमे for द्रुते; 3. BD. क्लीबे for क्लीबः; 4. A. चतुरस्तु, for चत्वरस्तु; 5. A. चतुष्पथि for चतुष्पथे. 4185. 1. BD. भवने for भुवने. 4187. 1 all the Mss. read बुद्धिजीविनि for वृद्धिजीविनि which is wrong.

जाङ्गलं पिशितेऽथ स्याज्जटालो[1] बहुपादपि ।
जीमूतो जलदे शैले जम्बूकः [1]क्रोष्टुपाशिनोः ।
जामाता तु श्वेततिले जम्बालौ[1] पङ्कशैवलौ ।
झल्लरी वाद्यभेदे स्याच्छत्रान्तालम्बिवाससि ।
हारमध्यमणौ पुंसि तरलस्त्रिषु चञ्चले ।
तरणिः स्त्री हविर्मन्थे नावि पुंसि तु भास्करे ।
दृङ्मध्ये स्त्री पुमान् दैत्ये नक्षत्रे तारकं न ना ।
त्रिधामा दहने विष्णौ त्रिशङ्कुरुडुतार्क्ष्ययोः ।
एरण्डे[1] यूनि तरुणस्तरुणी युवतिः सहा ।
तलिमं कुट्टिमे तल्पे तमोनुत्तेजसां त्रये ।
स्वर्गेऽन्तरिक्षे त्रिदिवस्तृण[1]ताक्षतृणत्वयोः ।
तेमनं व्यञ्जने क्लेदे[1] तोत्रे[2] तोदे च तोदनम् ।
तमस्विन्यां तमिस्रा स्त्री तमिस्रं तिमिरे न ना ।
तानितं तूलितपटे गुणवादित्रभाण्डयोः ।
छिन्नपुच्छे वृषे पुंसि निःश्मश्रावपि तूबरः[1] ।
तोरणोऽस्त्री बहिर्द्वारदारुयन्त्रविशेषयोः ।
तूलिका कूर्चिकाशय्योर्दिग्वासा श्रमणे हरे
शास्त्रोपलब्धि[1]धीदृष्टिसमयेषु तु दर्शनम् ।

---

4190. 1. A. जटिलः for जटालः. 4191. 1. B. क्रोष्ट for क्रोष्टु 4192. 1 A. जम्बालो for जम्बालौ. 4193. 1. A. छत्रान्ता बिम्बवाससि for 4193b. 4198. 1. D. एनण्डे. for एरण्डे. 4200 1. AD. °तास्तृ° for °ताक्ष°. 4201. 1. BD. क्लेशे for क्लेदे; 2. A. तोद्रे, D. श्रोत्रे for तोत्रे. 4204. 1. A. तूपरः for तूबरः.

द्विजेन्द्रो[1] ब्राह्मणे चन्द्रे सुपर्णे द्वापरो[2] युगे ।
संदेहेऽथ सपिण्डे स्याद्दायाद[1]स्तनयेऽपि च ।
स्यात् स्त्री पुनर्भ्वो तत्पत्यौ[1] दिधिषुर्दीधिषूर्नरौ ।
दक्षिणः सरले दक्षे देशभेदे तु दक्षिणा ।
दूषणं[1] तु कलङ्कार्थे दूषणो[2] रजनीचरे ।
दुन्दुभिर्वत्सरे भेर्यां गन्धर्वे राक्षसान्तरे ।
दुरितं व्यसने पापे द्रविणं बलवित्तयोः ।
उपनीतो व्रती यज्वा नियमस्थश्च दीक्षितः ।
सुरतक्रान्तिधार्ष्ट्येषु धर्षणं धर्षणीत्वरी ।
धिषणा तु मनीषायां धिषणो देवदेशिके ।
धारणो[1] मानभेदे च धरणं धरणी मही ।
धावनं [1]गमने शुद्धौ स्थितौ[2] विश्वे च धारणा ।
योगाङ्गेऽथ[1] वृषे शुभ्रे धवलो धवली[2] गवि ।
धनदो दातरि श्रीदे नभसो व्योम्नि सागरे ।
निगमो निर्णये वेदे पुरे मार्गे[1] वणिक्पथे ।

---

4207. 1. BD. लब्ध for लब्धि. 4208. 1. BD. द्विजेन्द्रे for द्विजेन्द्रः; 2. AB. द्वापरे for द्वापरः° 4209. 1. A. दयादाः for दायादः. 4210. 1. BD. तन्नाथः for तत्पत्यौ. 4212. 1. A. पूषणं for दूषणं; 2. A. रूषणः, B. दूषणो for दूषणः. 4216. 1. BD. सुरताक्षान्ति for सुरतक्रान्ति. 4218. 1. A. धार्षेण, BD. धारणः for धारणो. 4219. 1. A. गमनं for गमने; 2. A. स्फीता for स्थितौ. 4220. 1. B. योगाङ्गो° for योगाङ्गे°; 2. A. धवती for धवली. 4222. 1. A. मार्ग for मार्गे.

कर्म भृत्युपभोगेषु निर्वेशो मूर्च्छनेऽपि च ।
निवेशौ शिबिरोद्वाहौ निरोधौ रोधसंक्षयौ[1] ।
निह्नवस्तु निकारे स्यादविश्वासेऽप्यपह्नवे ।
आज्ञायामपि निर्देशो निषधोऽनलभूभृतोः ।
निकारस्तु तिरस्कारे धान्योत्क्षेपणशाठ्ययोः ।
निश्चयाज्ञाप्रतिज्ञासु नियमो यन्त्रणे व्रते ।
नितम्बः पश्चिमश्रोणिभागेऽद्रिकटकेऽपि च ।
नालिका विवरे वेणुभाजने चुल्लिरन्ध्रके ।
निर्ग्रन्थः श्रमणे निःस्वे[1] निर्वृतिः सौख्यनाशयोः ।
निर्वाणं[1] मरणे [2]मोक्षे निर्वृतौ गजमज्जने ।
निरस्तः स्यात् त्रिषूत्सृष्टसायके त्वरितोदिते ।
निराकृते च निष्ठ्यूते निहतो[1] न्यक्कृते[2] हते ।
निवातस्त्रिषु निर्वाते दृढे तु कवचे पुमान् ।
वारणापाङ्गदेशे स्यान्निर्याणं[1] निर्गमे मृतौ ।
निदाघ[1] ऊष्मणि ग्रीष्मे स्वेदे तापे च घर्मवत् ।
नालीकः सायके पुंसि नलिने तु नपुंसके ।
निवहो वायुभेदेऽपि नरको [1]निरयेऽसुरे ।
पतंगः शलभे शालौ खगे कमलबान्धवे ।

---

4224. 1. A. रोप for रोध. 4231. 1. D. निस्वे for निःस्वे. 4332. 1. A. निर्याणं for निर्वाणं; 2. A. मोक्षः for मोक्षे. 4234. 1. A. निवातः, B. निहतौ, D. निहितः for निहतः; 2. A. °ऽन्यकृतो for न्यक्कृते. 4236. 1. B. निर्वाणं for निर्याणं. 4237. 1. A. निदाघे for निदाघः. 4239. 1. AB. निरयो° for निरये°.

पुष्परेणौ च रेणौ च परागः परिघोऽर्गले ।
परिघाते दन्तभेदे प्रसवः फलपुष्पयोः ।
जनने तनये गर्भमोचनेऽभिषवेऽपि च ।
पर्जन्यो वासवे गर्जदभ्रे जीमूतनिस्वने[1] ।
प्रलयो मूर्च्छने श्लेषे संवर्ते मरणेऽपि च ।
प्रयोगः स्यात् कर्मविधौ ग्राम्यधर्मकुसीदयोः ।
प्रणयः संस्तवे प्रेम्णि याचने सौहृदे रसे ।
प्रवहो वायुमात्रे स्यात् प्राप्तिवायुप्रभेदयोः ।
प्रवाहस्त्वम्भसां वेगे प्रकृष्टाश्वे[1] प्रवर्तने ।
पुरुषोऽश्वस्थितौ[1] पुंसि पुंनागे परमात्मनि ।
प्रग्राहोऽश्वादिरज्ज्वंशुबन्दिषु[1] प्रग्रहोऽपि च ।
पलाशं तु दले ब्रह्मवृक्षराक्षसयोः पुमान् ।
प्रणिधिः प्रार्थने चारे प्रस्तरस्त्वश्मरत्नयोः[1] ।
आद्योपलब्धिस्थाने च मूले च [1]प्रभवोऽम्भसाम् ।
पुलकः कृमिरोमाश्वहीररत्नास्त्र[1]राजिषु ।
प्रदरा बाणरुग्भङ्गाः[1] प्रतापौ पौरुषातपौ ।
प्रत्ययः ख्यातिविश्वासशपथज्ञानहेतुषु ।
पुष्करं हस्तिहस्ताग्रे व्योम्नि वाद्यमुखे जले ।

---

4244. 1. B. निःस्वने for निस्वने; D. om. li. 4244—4245. 4249. 1. B. प्रकृष्टाश्व for प्रकृष्टाश्वे. 4250. 1. BD. अश्वस्थिते for अश्वस्थितौ. 4251. 1. A. बन्धिषु for बन्दिषु. 4253. 1. BD. रक्तयोः for रत्नयोः. 4254. 1. BD. प्रसवः for प्रभवः. 4255. 1. A. रत्नास्त्रि for रत्नास्त्र. 4256. 1. A. भागाः for भङ्गाः

तीर्थभेदेऽसिधारायां पर्यायोऽवसरे क्रमे ।
प्रमाणं हेतुविश्वासशास्त्रेयत्तासु शासने ।
मर्यादायां प्रपञ्चस्तु विपर्यासे सुविस्तरे ।
प्रतीतस्त्रिषु[1] विख्याते प्रीते प्रत्ययिते बुधे[2] ।
प्रतिपत्तिथिबुद्धयोः स्यात् प्रकृतिर्मूलकारणे ।
स्वभावजन्त्वमात्यादिच्छन्दो[1]भूतेषु मातरि ।
पक्षतिः पक्षमूले स्याद् द्वयोः प्रतिपदोरपि ।
पीयूषममृतं ना तु नवसूतगवीपयः ।
पिनाकोऽजगवे पुंसि रजोवर्षे तु वा नरि ।
पल्लवो ना विटे देशेऽप्यस्त्री किसलयेऽञ्चले ।
प्रवालो विद्रुमे वीणादण्डे ना पल्लवे स्त्रियाम् ।
छेदिर्नेत्ररुजोः क्लीबे समूहे पटलं न ना ।
प्रवणः[1] स्यात् त्रिषु प्रह्वे कुशले वशवर्तिनि ।
चतुष्पथे क्रमान्निम्ने प्रवरः शालिमुख्ययोः ।
पवित्रः पावके विष्णौ पवित्रं कलशे[1] कुशे ।
धने हेम्नि ब्रह्मसूत्रे मन्त्रे च प्रयते त्रिषु ।
आशुव्रीहौ पाटलो ना पाटली कुसुमे न ना ।
प्रग्रीवमस्त्री ग्रीवायां प्रासादे कलशेऽपि च ।
त्रिषूर्ध्वबाहुपुंमाने[1] स्त्रीणां पुंवद्धृति[2]स्थितौ ।

---

4262. 1. B. प्रतीतं त्रिषु for प्रतीतस्त्रिषु; 2. BD. °ऽम्बुधौ for बुधे. 4364. 1. BD. च्छन्दोमाभूतमातृषु for 4264b. 4271. 1. BD. प्रणव: for प्रवणः. 4273. A. कुशले for कलशे. 4277. 1. A. पुङ्माने, BD. दिङ्माने for पुंमाने; 2. BD. पुंवत्प्रतिस्थितौ for पुंवद्धृतिस्थितौ.

पुरुषाणां समूहे च पौरुषं स्यान्नपुंसके ।
फेनिला बदरेऽरिष्टे पुंसि फेनवति त्रिषु ।
फलकी चन्दनश्चर्मी बर्बरो[१] भङ्गुरेऽधमे[२] ।
बहुलोऽग्निः कृष्णपक्षो[१] बहुलैलार्जुनी मही ।
कृत्तिका भूम्नि बहुला बह्वर्थो बहुलस्त्रिषु ।
बृहत्यः पद्यवार्ताकीकण्टकार्यो[१]ऽथ बन्धकी ।
करिण्यां कुलटायां च भ्रातृव्यो भ्रातृजे रिपौ ।
भवनं जन्मगृहयोः भुवनं जगदम्भसोः ।
भरतं नाट्यशास्त्रे स्याद्भरतो मुनिभूभृतोः ।
भारती [१]तुलसीवाण्योर्भैरवो रुद्रघोरयोः ।
मण्डली श्वा रविः शुक्रो[१] मार्जारो भुजगो नृपः ।
मदनो धुस्तुरे[१] वृक्षभेदे मन्मथसिक्थयोः ।
मासे मद्ये हरौ पुष्पसमयेऽपि च माधवः ।
धुस्तूरे सर्पभेदे च मातृभ्रातरि मातुलः ।
मण्डलं त्रिषु बिम्बे स्याद् वृन्दे द्वादशराजके ।
प्रतिबिम्बे कुष्ठरोगे ग्रामौघ उपसूर्यके ।
स्यातां कपित्थकन्दर्पौ मन्मथौ मानसं हृदि ।

---

4280. 1. BD. बर्बुरः for बर्बरः; 2. यमे for °ऽधमे. 4281. 1. A. पक्षे for पक्षः. 4283. 1. B. कककाल्यः, D. ⋯काकोल्यः (blank for क) for कण्टकार्यः. 4287. 1. A. तुलशी for तुलसी. 4288. 1. A. श्वक्रः, BD. शाकः for शुक्रः (All three mss. give wrong readings). 4289. 1. धूद्धरे. B. घुर्धुरे D. दुर्धरे for धुस्तुरे. 4291. 1. AB. घुर्धुरे, D. दुर्धरे for धुस्तूरे.

सरोभेदेऽपि मन्दारः पारिभद्रे सुरद्रुमे ।
राष्ट्रक्षोभेऽपि मकरो मुकुन्दौ निधिकेशवौ ।
मार्गणो याचके बाणेऽन्वेषणे मार्गणं न ना ।
मरीचिर्ना मुनी रश्मिर्वा स्त्री स्त्री मृगतृष्णिका ।
मोहनं सुरते मद्ये महिषी पशुराट्स्त्रियोः ।
असिबन्धनकाञ्च्याद्रिकटकेषु तु मेखला ।
पुमानन्योदयद्वेषे[1] मत्सरस्त्रिषु तद्वति ।
कल्याणे मङ्गलं भौमे मङ्गलो मन्थरस्त्रिषु ।
मन्द[1]गामिनि मन्थाने सूचके मधुरस्त्रिषु ।
स्वादौ हृद्ये मयूखस्तु ज्वालायां किरणे त्विषि ।
मलिनी वृत्तवाहिन्योर्मोदको भक्ष्यहर्षयोः ।
युञ्जानः सारथौ विप्रे [1]युतकं यौतके युगे ।
वस्त्राञ्चले वधूवस्त्रे यजनं यज्ञपूजयोः ।
ना स्वर्णघर्षणग्राव्णि रोषणः सरुषि त्रिषु ।
रेवटो वेणुवातूलविषवैद्येषु[1] रेवटम् ।
दक्षिणावर्तशङ्खे स्याद्रशना दर्भदामनि ।
काञ्चीगुणे च जिह्वायां रसना रसनं विषे ।
आस्वादने च शब्दे च रवणः शब्दनोष्ट्रयोः ।
राजीवं पङ्कजे ना तु मीनभेदे मृगान्तरे ।
रोहितं त्रिषु शोणे स्याद् रोहितो मृगमत्स्ययोः ।

---

4301. 1. A. °द्वेषि for °द्वेषे. 4303. 1. B. मन्थ° for मन्द°. 4306. 1. B. युतरयोतगे, D. व्युतरयौतगे for युतकं यौतके. 4309. 1. A. वैद्ये पुरेऽवटम् for वैद्येषु रेवटम्.

गोपित्ते रक्तकल्हारे वरयोषिति रोचना ।
नक्षत्रे कटुरोहिण्यां कन्यायां गवि रोहिणी ।
रुचको मातुलुङ्गे स्याद्भूषणे[1] रदने मणौ ।
लवणस्तु रसे दैत्ये लवणं सैन्धवादिके ।
गमने चोपवासे च लङ्घनं लालसा द्वयोः ।
औत्सुक्ये चाभिलाषे च ललामोऽस्त्री ललाम च ।
श्रेष्ठभूषापुण्ड्रशृङ्गपुच्छचिह्नाश्वलिङ्गिषु[1] ।
प्रभावे पौरुषेऽङ्केऽथ ललनं केलिशोभयोः ।
नीलिन्यां मांसपिण्डे च [1]मणिभुवि च लोचकः[2] ।
चरणो भूरुहे वप्रे वर्तकोऽश्वखुरे खगे ।
वारणः सेतुगजयोर्वञ्चकौ धूर्तजम्बुकौ ।
विहारः सौगतावासे क्रीडायां च परिक्रमे ।
भ्रान्तिसंदेहशोभासु विलासेऽपि च विभ्रमः ।
वाहसो[1]ऽजगरे वह्नौ चित्रे दर्पे च विस्मयः[2] ।
विस्तारे प्रतिबन्धे च विष्कम्भो विबुधः सुरे ।
प्राज्ञे च विनयः शिक्षाविद्याचारप्रशान्तिषु ।
वसतिस्तु गृहे स्थित्यां जैनानामास्पदे निशि ।
पर्याहाराध्वभारेषु[1] स्यातां विवधवीवधौ ।

---

4317. 1. D. स्याद्भ्रमणे for स्याद्भूषणे. 4321. 1. B. भृङ्गिषु for लिङ्गिषु. 4323. 1. All three mss. give wrong reading; 2. BD. लोचकम् for लोचकः. 4328. 1. A. वाहनः for वाहसः; 2. A. विस्मयम् for विस्मयः. 4332. 1. AD. पर्याहारेऽध्वहारे च, B. पर्याहारेऽध्वगारे च for 4332a.

वडवाश्वा ब्राह्मणी च वाहिनी सिन्धुसैन्ययोः ।
शूद्रा मृतप्रजा वन्ध्या कन्या दृष्टरजा अपि ।
वृषली नर्तकीमुग्धाविदग्धास्वेव वाणिनी ।
विधानं वारणग्रासे प्रकारे वैरकर्मणि ।
वेदनाप्रेरणाभ्यर्चा[1]क्रियाभृतिसमृद्धिषु ।
व्यसनं [1]सक्तितात्पर्यविपत्तिमृगयादिषु ।
दैवानिष्टफले तोये पैशुन्यादौ प्रकोपने ।
वेष्टने [1]मुकुटोष्णीषे व्युत्थानं प्रतिकूलता ।
स्वातन्त्र्यकरणं चाथ विषयी राज्ञि मन्मथे ।
वाच्यवद्विषयोपेते विषयः स्त्र्यादिराष्ट्रयोः ।
आस्पदे गोचरे दीपभाजने चावलम्बने[1] ।
पुंनपुंसकयोर्व्योम्नि विहायः पुंसि पक्षिणि ।
नक्षत्रे च खनित्र्यां च विशाखा[1] षण्मुखे पुमान् ।
उल्लोचाध्वरयोरस्त्री षण्डः शून्यसमूहयोः ।
वितानोऽथ द्रुविस्तारे पल्लवे स्तम्बशाखयोः ।
विटपोऽस्त्री व्यलीकं स्यादप्रिये[1]ऽकार्यदुःखयोः ।
विलक्षेऽथ[1] विमानोऽस्त्री देवतायानवेश्मनोः ।

---

4337. 1. B. °त्यर्चा for °भ्यर्चा. 4338. 1. ABD. शक्ति for सक्ति. 4340. 1. BD. मकुट° for मुकुट°. 4343. 1. BD. दीपपात्रे चालम्बनेऽपि च for 4343b. 4345. 1. BD. विशाखः for विशाखा. 4348. 1. A. अप्रिय, D. अप्रियं for अप्रिये. 4349. All three mss. read विलक्षे instead of वैलक्ष्ये. 1. BD. च for °ऽथ.

पश्वङ्गे हस्तिरदने विषाणं स्यात् त्रिलिङ्गकम् ।
शयालुः[1] शयनश्वोभौ निद्रालौ त्रिषु न द्वयोः ।
शयनं मञ्चरतयोः [1]शमनोऽजगरे यमे ।
शासनं निग्रहे शास्त्रे वेदवाक्येषु रक्षणे ।
वाङ्नियोगे[1] प्रकरणे [2]लेख्ये नियमकर्मणोः ।
श्वशुर्यो[1] देवरे[2] स्याले शकुन्तो[3] भासपक्षिणोः ।
आक्रोशने स्याच्छपथः शपने तनयादिभिः ।
शिशौ[1] मत्स्ये च शिशुकः शमलं शकृदंहसोः ।
श्रावकः [1]कर्णमोषेऽपि शिञ्जिनी नूपुरज्ययोः ।
शर्कराल्पकपाले स्यात् प्रदेशे शर्करावति ।
मृद्भेदे शकले खण्डे शर्करायामथ स्त्रियाम् ।
शीधु[1]पाने मणौ शीधौ[2] सरघा(को ?) [3]मद्यभाजने ।
साधनं शेफसि गमे[1] सेनाङ्गे सिद्ध्युपाययोः ।
निर्वृत्तौ[1]मृतसंस्कारे दापनेऽनुगमे धने ।
मारणे यातनायां च संस्थानं मरणे स्थितौ ।
वाद्यं वंशादिके क्लीबे सच्छिद्रे सुषिरं त्रिषु ।

---

4351. 1. A. शयाल: for शयालुः. 4352. 1. A. शमनोऽजागरे, B. शमनेऽजगरे for शमनोऽजगरे. 4354. 1. A. वा नियोगे, D. वान्द्रनियोगे for वङ्नियोगे; 2. D. लेखे for लेख्ये. 4355. 1. D. श्वतुच्छौ for श्वशुर्यः; 2. BD. देवरस्यालौ for देवरे स्याले; 3. BD. शकुन्तो भासपक्षिणौ for 4355b. 4357. BD. शिश्नमध्ये for शिशौ मत्स्ये. 4358. 1. BD. कर्णदोषे for कर्णमोषे. 4361. 1. BD. शीथु for शीधु; 2. BD. शीथौ for शीधौ; 3. A. मध्य° for मद्य°. 4362. 1. B. शमे for गमे.

सरन्ध्रे त्रिषु वंशाद्ये वाद्ये क्लीबे नटे नरि ।
स्त्रियां विद्रुमवल्ल्यां सुषिराथ[1] गवि स्त्रियाम् ।
वसन्ते ना सुगन्धौ च सुरभिर्विश्रुतेऽर्थवत् ।
स्पर्शनः पवमाने[1] स्यात् स्पर्शनं स्पृष्टिदानयोः[2] ।
सारङ्गो हरिणो वर्णश्चातकः षट्पदोऽपि च ।
सैन्धवं लवणेऽश्वे[1] ना सौवीरं काञ्चिकेऽञ्जने ।
बदरे देशभेदे ना स्यन्दनो रथवृक्षयोः ।
संगरस्तु प्रतिज्ञायां विपत्त्यां सांपरायिके ।
षण्डे[1] शमीफलेऽथ स्यात् सारसं सरसीरुहे ।
जलपक्षिविशेषे ना सरःसंबन्धिनि त्रिषु ।
संभ्रमोऽत्यादरे भीतौ सायकः शरखड्गयोः ।
सामर्थ्ये शक्तिसंबन्धौ समितिर्युद्धसंसदोः ।
मद्यार्थो[1]भिषवे संधौ धनुःष्विषुनिवेशने ।
संधानं हेम्नि तत्कर्षे सुवर्णं ना तु भूरुहे ।
हिरण्यं कनके द्युम्ने नाम(मान?)भेदेऽप्यकुप्यके ।
हरिणी तु मृगो[1] हेमप्रतिमा हरिणो मृगे ।
शुक्लवर्णे[1] च हृदयं हृत्प्रदेशे च मानसे ।

---

4367. 1. A. सुषिरोऽथ for सुषिराथ. 4369. 1. A. पवमानः for पवमाने; 2. D. मानयोः for दानयोः. 4371. 1. A. श्येना for °ऽश्वे ना. 4374. 1. A. षण्डः for षण्डे. 4378. 1. A. मध्यार्थो° BD. मदार्थो° for मद्यार्थो° (All three mss. give wrong readings). 4381. 1 A. मृगे. for मृगः. 4382. 1. BD. om. ll. 4382.—4384.

हरणं करणं नृत्तं धनुषान्यास्त्रवारणम् ।
यौतकादि हृतिस्तप्तशीतल(वा ?)र्यथ हिंसनम् ।
हरितस्तु[1] मुनौ श्यामे हारीतो मुनिपक्षिणोः ।

इति वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे-
ऽनेकार्थाधिकारे त्र्यक्षराध्यायः ॥

——:※:——

# २८

## चतुरक्षराध्यायः

अभिरूपः सुरूपः स्याद्विश्रुते च विचक्षणे ।
अवदातः सिते शुद्धेऽप्ययुगास्त्रौ हरिस्मरौ
अहिशत्रुः खगाधीशे नकुले नाकनायके ।
अभिषङ्गस्त्वभिभवे[1] संगाक्रोशनयोरपि ।
वृष्टिरोधे प्रतिष्टम्भे गजफालेऽप्यवग्रहः ।
अधि[1]वासो निवासे स्याद्गन्धमाल्यादिसंस्कृतौ ।
अवदानं[1] कर्म वृत्तं खण्डनं गुणकीर्तनम् ।
त्यागमोक्षक्रियासाध्यफलप्राप्तिषु दिव्यपि ।
स्याच्चतुर्ष्वपवर्गोऽथ प्रभावे भावसूचके ।
अनुभावोऽपदेशस्तु निमित्ते व्याजलक्षयोः ।

---

4384. A. हृदि° for हृति°. 4385. 1; BD. शुकवर्णे for हरितस्तु. 4389. 1. BD. °अभिषवे for °अभिभवे. 4391. 1. A. आदि for अधि°. 4392. 1. A. उपदानं for अवदानं.

दीर्घद्वेषेऽप्यनुशयः पश्चात्तापानुबन्धयोः ।
अनुषङ्गः कृपायां स्यात् प्रकृतस्यानुवर्तने ।
हिंसायामभिमानः स्याद् ज्ञाने प्रणयदर्पयोः ।
अवष्टम्भस्त्वहंकारे गृहे[1] कान्त्यवलम्बयोः ।
अभिहारोऽभियोगे स्याच्चौर्यसंनाहयोरपि ।
सवने[1] [2]मद्यसंधाने स्नाने चाभिषवस्त्रये ।
अभिग्रहोऽभियोगे स्यादभितोग्रहणेऽपि च ।
अनिमेषोऽप्यनिमिषोऽप्युभावमरमत्स्ययोः ।
अन्तर्वाणिः[1] शास्त्रविदि[2] पुरोधसि बहुश्रुते[3] ।
अपवादौ तु निन्दाज्ञे गुह्यगूढाववस्करौ ।
अन्तेवासी तु चण्डाले शिष्यनापितयोरपि ।
क्षत्रिये त्वम्बरीषः स्यात् पुंसि भ्राष्ट्रे नपुंसके ।
अवताम्भो[1] (अवरोहो?) ऽवतरणं मूलादग्रं गता[2] [लता] ।
अवगाहो जलद्रोण्यामापगाद्यवमज्जने ।
गर्वे लेपेऽवलेपः स्यादनुतर्षः सुरातृषोः ।
आडम्बरस्तु [1]पटहशब्दे वारणगर्जिते ।
आत्मयोनिस्तु कन्दर्पे मारुते वारिजासने ।

---

4399. 1. BD. गृह, A. ग्रह for गृहे. 4401. 1. A. वसने for सवने; 2. B. मेघ for मद्य. 4404. 1. A. अन्तर्वाणी for अन्तर्वाणिः; 2. A. विधि for विदि; 3. A. श्रुतौ for श्रुते. 4408. 1. B. अथारम्भः D. अतारम्भः for अवरोहः. (all mss. give wrong readings.); 2. A. अग्रगता [लता], BD. अग्रगतागतौ for अग्रगता [लता]. 4411. 1. A. पटहः for पटह.

आच्छोटनं[1] स्यादाघाते मृगयायां विमर्दने ।
आरम्भणो चिकित्सायामुपधायामुपक्रमः ।
स्नानाचान्त्योरुपस्पर्श उदवाहो घनौघयोः ।
उपतापौ रुजातापावैरावत्यौ 'तटिच्छ्रियौ ।
ऐरावतः सुरगजे घने काकोदराधिपे[1] ।
कलहंसस्तु कादम्बे राजहंसे[1] महानृपे ।
करहाटोऽम्बुजादीनां शिफायां देशभूरुहोः ।
कुरुविन्दो रत्नभेदे मुस्तायां हिङ्गुलेऽपि च ।
चन्द्रार्कयोर्ग्रहपतिः शंकरेऽपि गणेश्वरः ।
वर्षुकाब्दे[1] मत्तगजे वासवे च घनाघनः ।
अर्कानलौ चित्रभानू चक्रपादो रथेभयोः[1] ।
जने देशे जनपदः चन्द्रेऽर्केऽग्नौ तमोनुदः ।
तारकारिर्गुहे भानौ तेजोनिधिरिनेऽनले ।
दिवाभीत[1] उलूके स्यात्तस्करे कुमुदाकरे ।
दिवाकीर्तिस्तु चण्डाले नापितेऽथ धनंजयः ।
फल्गुनेऽग्नौ पशुपतिः शंकरे जातवेदसि ।
द्वारि द्वास्थे प्रतीहारः रः ।
पुण्डरीकस्तु शार्दूले दिग्गजे सर्पपुंगवे ।

---

4413. 1. BD. आस्फोटनं for आच्छोटनं. 4416. 1. BD. तडित्° for तटित्. 4417. 1. A. °दरायवे for °दराधिपे. 4418. 1. D. हंसः for 4422. 1. A. वर्षकाब्दे; B. वर्षकन्दे for वर्षुकाब्दे. 4423. 1. A. °ऽरिदेहयोः for रथेभयोः. 4426. 1. B. om. I 4426.

मुनि[1]भेदे राजभेदे क्लीबे तु सितपंकजे ।
स्त्रियां सुराङ्गनाभेदे पवमानोऽग्निवातयोः ।
वायुभेदे परिवहः[1] परिवर्तो[2] जगत्त्रये ।
परिभ्रमेऽ[1]ब्दे पर्याप्तौ परिक्षेपस्तु वेष्टने ।
हस्तिनां[1] पादपार्श्वेऽथ पितुः पितरि वेधसि ।
पितामहः परीवाप[1] आलवाले परिच्छदे ।
रक्षः[1]सतोः पुण्यजनः पामराज्ञौ पृथग्जनौ ।
नटे काशे पोटगलः कपौ भेके प्लवंगमः ।
परिग्रहः परिजने पत्न्यामादानशापयोः ।
विप्राच्छूद्रा[1]सुते स्तेने क्लीबः पारशवोऽयसि ।
परिवारः परिजने शस्त्रकोशे परिच्छदे ।
विगाढ गात्रिकाबन्धे समूहारम्भयोरपि ।
आदाने पृतनापृष्ठे पतद्ग्राहे प्रतिग्रहः[1] ।
प्रजापतिर्मरीच्यादौ परमेष्ठिनि पार्थिवे ।
बाहुलेयो वृषे स्कन्दे भूतनाथः शिवे नृपे ।
महाकालो हरे हालाहले बाणासुरेऽपि च ।
परमात्ममहावेश्मविहारेषु महालयः ।

---

4431. 1. BD. अरि for मुनि. 4433. 1. A. परिवारः परिवहः for 4433a; 2. BD. परिवर्ते for परिवर्तः. 4434. 1. BD. परिभ्रमो° for परिभ्रमे. 4435. 1. A. स्तिताम° for हस्तिनां. 4436. 1. A. परिवापः for परीवापः. 4437. 1. A. दक्षः for रक्षः. 4440. 1. BD. °शूद्र for °शूद्रा°. 4443. 1. B. परिग्रहे for प्रतिग्रहः.

संकर्षणः[1] सौरभेये रौहिणेयो बुधे गुहे ।
रजस्वलस्तु महिषे पुष्पवत्यां रजस्वला ।
लोकपालो नृपेन्द्राद्योः राज्ञि लक्ष्मीपतिर्हरौ ।
वृषाकपिस्तु वैकुण्ठे हरेऽर्केऽग्नौ विभावसुः ।
विश्वकर्मा द्युतक्ष्णि स्यादर्यम्णि हरिवातयोः ।
वाडवेयोऽश्विनोर्विप्रे वासुदेवो मुनौ[1] हरौ ।
धर्माध्यक्षे ज्योतिषिके वारवाणि[1]रथो वटे ।
व्यवहारो वाक्प्रयोगे विवादे द्यूतदण्डयोः ।
शासने वित्तसंवादे संबन्धेऽसिवणिज्ययोः ।
वानप्रस्थो मधुष्ठीले तृतीये ब्राह्मणाश्रमे ।
व्यसने स्याद् व्यतिकरः संकरे[1] व्यतिषञ्जने ।
वनस्पतिर्वृक्षमात्रेऽप्यपुष्पात् फलवद्द्रुमे ।
स्याद्वर्धमान एरण्डे शरावे भूषणेऽपि च ।
शंकुकर्णौ गर्दभोष्ट्रौ शरभृङ्गौ शिलीमुखौ ।
श्रीवत्साङ्कौ हरिवृकौ सिंहकाकौ सकृत्प्रजौ ।
समाहारस्तु संक्षेप एकत्रकरणेऽपि च ।
स्त[1]नयित्नुर्जलधरे तदीये [2]गर्जितेऽपि च ।
सालावृकः शुनि [1]क्रोष्टौ वृके स्थूलोच्चयस्त्वयम् ।

---

4448. 1. BD. संकर्षणो for संकर्षणः. 4453. 1. A. मनौ for मुनौ. 4454. 1. A. वाणीरयो वटी for बाणिरथो वटे. 4458. 1. BD. संगरे for संकरे. 4464. 1. BD. om. 1. 4464; 2. A. गजगर्जितेऽपिच for गर्जितेऽपि च. 4465. 1. B. क्रोष्ट्रौ for क्रोष्टौ.

असाकल्ये[1] वारणानां मध्यमे च गतिक्रमे ।
सांपरायस्तु संपाते(?) [1]आघातागामिकालयोः ।
हेरम्बे हस्तमल्लः स्यादमराधिपकुञ्जरे ।

इति वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
❀अनेकार्थाधिकारे चतुरक्षराध्यायः ॥



# २९

## पञ्चाक्षराध्यायः

विष्णौ [1]शक्रेऽसुरारातिर्ब्राह्मणे[2]ऽप्यमृताशनः ।
आशुशुक्षणिरर्केऽपि यज्वन्यप्यासुतीवलः ।
अनन्ते वित्तनाथे च तालाङ्केऽप्येककुण्डलः ।
ध्रु[1]वेऽप्यौत्तानपादिः स्याद् [2]गृध्रेऽपि कमलच्छदः ।
कथाप्रसंगस्तु विषवैद्ये वातगुणाधिके ।
काकेऽपि कौशिकद्वेषी बलेऽपि खर[1]खण्डनः ।
काशे चामर[1]पुष्पः स्यात् केतकीसहकारयोः ।
तमोविहारी खद्योत उलूके चोररक्षसोः ।
नीपे धूलिकदम्बो ना क्लीबे तु रजसां गणे ।

---

4466. 1. A. असाकल्यो for असाकल्ये. 4467. 1. A. आयाता° for आघाता°. ❀ BD. नानार्था° for अनेकार्था°. 4469. 1. BD. चक्रे for शक्रे; 2. BD. वाह्मणेष्वमृ° for ब्राह्मणेऽप्य° 4472. 1. A. धूपे for ध्रुवे; 2. A. ग्रन्थे for गृध्रे. 4474. 1. A. कर°, B. खग, D. वर for खर 4475. 1. B. °पुष्पं for °पुष्पः.

चन्द्रेऽपि देवतोच्छिष्टः शंकरे पांसु[1]चन्दनः
प्राचीनबर्हिरिन्द्रेऽग्नौ पुरुषव्याघ्र इत्ययम् ।
गृ[1]ध्रेऽपि प्रेतनिलयः श्मशाने वृषभध्वजे ।
मातुलपुत्रस्तून्मत्तफले मातुलनन्दने
पञ्चबाणे च सरितां पत्यौ च मकरध्वजः ।
वृषाकपायी श्रीगौर्योरौर्वेऽपि बडवामुखः ।
विकङ्कते गोक्षुरके [1]कोल्यां च स्वादुकण्टकः ।
निम्बे च हिङ्गुनिर्यासो हिङ्गुवृक्षरसेऽपि च ।
हिरण्यबाहुः शोणाख्यनदे पशुपतावपि ।

इति *वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
❀❀अनेकार्थाधिकारे पञ्चाक्षराध्यायः ॥

—•—

# ३०

## एकाक्षराध्यायः

एकाक्षरा इहोच्यन्ते पूर्वं नोक्ता यथाक्रमम् ।
अस्तु विष्णौ वर्णमात्रे स्यादिः काम उरीश्वरे ।
कः समीरार्कवेधस्सु खमुडौ व्योम्नि चेन्द्रिये ।
गौर्वृषे ना स्त्रियां [1]गोभूवाग्दिग्दृष्टिमरीचिषु ।

---

4478. 1. A. °नन्दनः for °चन्दनः. 4483. 1. BD ग्रन्थे for गृध्रे. 4484. 1. BD. गौल्यां for कोल्यां. * A. om. वत्सकुलवामनभट्टबाणविरचिते. ❀❀A. om. अनेकार्थाधिकारे; B. अनेकाक्षराधिकारे, D. अनेकार्थाक्षराधिकारे for अनेकार्थाधिकारे. 4490. 1. B. गोभ्र for गोभू.

द्वयोः सायकवज्राम्बु[1]स्वर्गयज्ञेषु लोम्न्यपि ।
ज्या शिञ्जिनीवसुधयोस्त्विड् ज्वालादीप्तिकान्तिषु ।
तृडाशायां पिपासायां द्वास्तु द्वाराभ्युपाययोः ।
द्योर्दिवौ स्वर्गवियतोराशोपायगमेषु दिक् ।
4495 दृग् बुद्धौ दर्शने नेत्रे स्त्री स्याद् द्रष्टरि तु त्रिषु ।
धूः स्त्री भारे यानमुखे नौः स्त्रियां तरिकालयोः ।
पूः स्त्रियां नगरे देहे[1] भूर्महीस्थानमात्रयोः ।
मा रमायां च [1]संपत्तौ रा द्वयोर्द्यु[2]म्नरुक्मयोः ।
लिप्साज्वालाकान्तिवाञ्छाभङ्गरोगेषु रुक् स्त्रियाम् ।
4500 भारतीवचसोर्वाक् स्याद् विः पक्षिपरमात्मनोः ।
विट् प्रजावैश्ययोः पुंसि स्त्री मले जनने द्वयोः ।
श्रीः कान्तिसंपदोर्लक्ष्म्यां लवङ्ग[1]कुसुमेऽपि च ।
त्रिषु स्वीये नरि ज्ञातौ स्वो धने तु नपुंसके ।
4504 साधौ श्रेष्ठे वर्तमाने सत्ये चाभ्यर्हिते च सत् ।

इति *वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
**अनेकार्थाधिकारे एकाक्षराध्यायः ॥

——:o:——

4491. 1. B. सर्ग for स्वर्ग. 4497. 1. BD. गेहे for देहे. 4498. 1. A. संपृक्तौ for संपत्तौ; 2. A. द्युम्निरुग्मयोः for द्युम्नरुक्मयोः. 4502. 1. BD. लवङ्गे for लवङ्ग. * A. om. वत्सकुलवामनभट्टबाणविरचिते. ** A. om. अनेकार्थाधिकारे.

# ३१

## अव्ययैकाक्षराध्यायः

एकाक्षराननेकार्थानुक्त्वा लिङ्गसमन्वितान् ।
निर्लिङ्गान्यव्ययानत्र प्रोच्यन्ते[1]ऽथ यथाक्रमम् ।
आङ् ईषदर्थेऽभिविधौ सीम्नि कर्मविशेषणे ।
आ प्रगृह्ये स्मृतौ वाक्येऽप्यास्तु संतापकोपयोः ।
ए[1] दुःखभावने कोपे प्रत्यक्षे सन्निधावपि ।
ॐ स्याद् ब्रह्मण्य[1]नुज्ञायां कं सुखेऽम्भसि [2]मूर्धनि ।
प्रश्ने क्षेपे विकल्पे किं कुः[1] पापेऽल्पार्थकुत्सयोः ।
चान्वाचये समाहारे [1]मिथोयोगे समुच्चये ।
तुर्भेदावधारणयोर्दुरशोभनदुःखयोः ।
धिग्भर्त्सने कुत्सने च नि न्यग्भावनिषेधयोः ।
नाभावान्यविरोधेषु निर्निश्चयनि[1]षेधयोः ।
प्रश्ने विकल्पे नु स्विच्च प्रादौ यात्राप्रकृष्टयोः ।
वि निषेधे पृथग्भावे वा विकल्पोपमानयोः ।
समुच्चये च वै पापे वाक्यारम्भप्रसिद्धयोः ।
समभेदे समीचीने सुष्ठुपूजासुखेषु [1]सु ।

---

4506. 1. A. प्रोच्यन्ते च, D. प्रोच्यन्तेऽत्र for प्रोच्यन्तेऽथ. 4509. 1. A. ऐ, B. हि for ए. 4510. 1. A. अवज्ञायां for अनुज्ञायां; 2. A. मूर्ध्नि च for मूर्धनि. 4511. 1. BD. कुश्च पापार्थकुत्सयोः for 4511b. 4512. 1. A. मिथ्या for मिथो. 4515. 1. BD. विरोधयोः for निषेधयोः. 4519 1. BD. च for सु.

स्मृतौ वृत्ते निषेधे स्म स्वः स्वर्गपरलोकयोः ।
हि[1] स्याद्विशेषणे हेतौ हिं[2] हेताववधारणे ।
आमन्त्रणे भर्त्सने हुं [1]हुं संप्रश्नवितर्कयोः ।
ही विषादे विस्मये च हा विषादशुगर्तिषु ।
उ तापेऽव्ययमीशे ना मा निषेधे श्रियां स्त्रियाम् ।
अ निषेधे पुमान्वि[1]ष्णौ वि विचित्रे [2]स्मरे पुमान् ।
तद्धेतौ त्रिष्वमुष्मिन् स्याद् यद्धेतौ प्रकृते त्रिषु ।
ह हि तु स्म च वै पादपूरणेऽपि प्रयुज्यते ।

इति वत्सकुलवामनभट्टबाणविरचिते *शब्दरत्नाकरे
अनेकार्थाध्याये एकाक्षराध्यायः ॥

---

# ३२

## अव्ययद्व्यक्षराध्यायः

अलं तु शक्तौ पर्याप्तौ भूषणे विनिवारणे ।
अपि संभावनाप्रश्नगर्हाशङ्कासमुच्चये ।
मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ।
अयि सानुनये प्रश्ने स्यादध्यधिक ईश्वरे ।
अनु प्रकारे वीप्सायां[1] पश्चाल्लक्षणहेतुषु ।

---

4521. 1. A. ह, BD. हिं for हि; 2. ABD. हि for हिं. 4522. 1. B. हं for हुं. 4525. 1. A. विष्णुः for विष्णौ; 2. BD. स्मरेऽपि च for स्मरे पुमान्. * B. om. शब्दरत्नाकरे. 4532. 1. BD. लिप्सायां for वीप्सायां.

अति प्रशंसातिक्रान्त्योरधिकार्थेऽपभाषणे[1] ।
अमा सहार्थे सामीप्ये वीप्साभिमुखयोरपि ।
पीडेर्ष्यानुमतिष्वस्तु विनियोगे[1] क्रियास्वह[2] ।
आहो निन्दाहेतुचित्रेष्वाराद् दूरसमीपयोः ।
इति हेतौ प्रकरणे प्रकारादिसमाप्तिषु ।
उपाधिकेऽन्तिके हीनेऽप्युत प्रश्नवितर्कयोः[1] ।
विस्तारेऽङ्गीकृतावूरी स्यादुररीति च ।
इवेत्थमर्थयोरेवमेव निर्धारणेऽपि च ।
कच्चित्प्रश्ने कामवादे[1] वार्तासंभाव्ययोः किल ।
किमु प्रश्ने विकल्पे च कुतः पश्ने च निह्नवे ।
निषेधवाक्यालंकारजिज्ञासानुनये खलु ।
तूष्णीमर्थे सुखे[1] जोषं तर्हि स्यात् प्रश्न उत्तरे ।
तथा समुच्चये साम्ये[1] परमार्थाभ्यनुज्ञयोः ।
तिरोऽन्तर्धौ तिर्यगर्थे दिष्टं स्यान्मङ्गलादिषु ।
तर्कनिश्चययोर्नूनं नानानेकोभयार्थयोः[1] ।
प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ।
नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ।
प्रबन्धे निकटेऽतीते पुराणानागते पुरा ।

---

4533. 1. A. °ऽवभाषणे, for °ऽपभाषणे. 4535. 1. BD. हनियोगो for विनियोगे; 2. A. क्रियास्विह, D. क्रियास्वपि for क्रियास्वह. 4538. 1. A. विकल्पयोः for वितर्कयोः. 4541. 1. DB. कामबीजे for कामवादे. 4544 1. BD. सुखं for सुखे. 4545. 1. BD. साध्ये for साम्ये. 4547. 1. A. °उपयार्थयोः, BD. °उपधार्थयोः for °उभयार्थयोः.

पुनरप्रथमे[1] पश्चे व्यावृत्तावधारणे ।
भागे [1]प्रकारकथने वीप्सायां लक्षणे प्रति ।
प्राच्यां पुरस्तात्प्रथमे पुरार्थेऽग्रे पुरः[1] स्मृतः ।
वीप्सायां [1]परितोभागे वर्जनेऽप्यपवत्[2] परि ।
परा विहीनेऽनावृत्तौ [1]हिते चामन्त्रणेऽद्भुते ।
तोषे खेदे कृपायां च बाढं त्वनुमतौ[1] दृढे ।
खेदानुकम्पासंतोषविस्मयामन्त्रणे बत ।
मुहुः क्षणेऽनुक्षणे च मिथोऽन्योऽन्यं रहस्यपि ।
यथा सादृश्ययोग्यत्ववीप्सास्वर्थानतिक्रमे[1] ।
यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ।
वृथा निष्कारणे वन्ध्ये शश्वद्भूयः सदेति च ।
सकृत् सहैकवारे च सामि स्यादर्धनिन्दयोः ।
स्वस्ति मङ्गलनिष्पापक्षेमेष्वाशीर्वचस्यपि ।
प्रत्यक्षसत्ययोः साक्षात् पृथगर्थेऽन्तिके हिरुक् ।
हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ।

इति ❀ वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे
अनेकार्थाव्यये द्व्यक्षराध्यायः ॥

---

4551. 1. A. °अप्रथम for अप्रथमे. 4552. 1. BD. प्रकारे मथने for प्रकारकथने. 4553. 1. A. पुरस्कृतम for पुरः स्मृतः. 4554. 1. A. लक्षणे for परितो; 2. B. °ऽप्य वत् । परं, D. °ऽप्य—परि । for °ऽप्यपवत् परि. 4555. 1. A. हिंत चामन्त्रणे त्सत् for 4555b. 4556. 1. BD. मते for मतौ. 4559. 1. A. स्वार्थानुति° for °स्वर्थानति° ❀ B om. वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे.

# ३३

## अव्ययाध्यायः

शीघ्रार्थे झटिति [1]स्राग्द्राङ्मङ्क्ष्वह्नाय सपद्यपि।
चिरायचिररात्रायचिरस्याद्याश्चिरार्थकाः।
मुहुर्भूयः [1]पुनः शश्वदभीक्ष्णमसकृत्समाः।
आहो उताहो किमुत विकल्पे किं किमूत[1] च।
निर्भरे सुष्ठु किमुत बलवत्स्वस्त्य(त्य?)तीव च।
वर्जनार्थे[1] पृथङ्नानान्तरेणर्ते [2]हिरुग्वषट्।
सार्धं साकं समं सत्रा सह व्यर्थे वृथा मुधा।
स्यात् प्राध्वमानुकूल्यार्थे हेतौ यत्तद्यतस्ततः।
दिवाह्नि निशि दोषा च नक्तं स्यात् साचि तिर्यचि।
अल्पे[1] किञ्चिन्मनागीषदसाकल्ये तु चिच्चन।
कदाचिज्जातु समया निकषा निकटार्थके।
समन्तात् सर्वतो विष्वक् परितश्च समन्ततः।
संबोधने[1] ननु प्याट् फाट् हे है हो अङ्ग [2]हन्त च।
विरो[1]धोक्तावपि ननु [2]प्रेत्यामुत्र भवान्तरे।
परमे मत ओमेवं कच्चित् कामप्रवेदने।

---

4566. B. माग् for स्राग्. 4568. 1. A. पुनः पुनः for भूयः पुनः 3569. 1. A. किमूति for किमूत. 4571. 1. A. भर्जनार्थे for वर्जनार्थे; 2. B. हिरुट् चषट्, B. चरुट् वषट् for हिरुग्वषट्. 4575. 1. A. अल्पे किञ्चिन्नहावृषगिषभसाकल्ये तु चिच्चना। for 4575. 4578. 1. BD. संबोधे तु for संबोधने; 2. BD. अन्त for हन्त. 4579. 1. BD. विरोधा—blank—प्रेत्या°; 2, A. वृत्या for प्रेत्या°.

वितथे तु मृषा[1] मिथ्या तत्त्वे त्वद्धाञ्जसापि च ।
वौष[1] श्रौष स्वष स्वाच्च वौषट् श्रौषड् वषट्कृतौ ।
देवानां च पितॄणां च प्रदाने हव्यकव्ययोः ।
स्वाहा स्वधा क्रमाज्जोषं दिष्ट्या शं च सुखार्थके ।
अतर्किते तु सहसा सद्यः सपदि तत्क्षणे ।
द्विस्त्रिश्चतुः पञ्चकृत्वो द्वित्र्याद्यावर्तने कृते ।
अस्मिन् कालेऽधुनेदानीं संप्रत्येतर्हि सांप्रतम् ।
यदा यर्हि तदा तर्हि तदानीं सर्वदा सदा ।
शश्वत् [1]सनाक् सना ज्योक् च [2]युगपत्त्वेकदा सकृत् ।
अन्यस्मिन्नन्यदा काले कस्मिन् काले कदेत्यदः ।
अतीते वर्तमानेऽब्दे आगामिनि यथाक्रमम् ।
परुत्परार्यैषमाः[1] स्युर्यथार्थं तु यथातथम् ।
अद्यात्राह्न्यथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् ।
तथाधरान्यान्यतरेतरात् पूर्वेद्युरादयः ।
उभयेद्युस्तूभयेऽह्नि परे त्वह्नि परेद्यवि ।
ह्यो गतेऽनागतेऽह्नि श्वः परश्वस्तु परेऽहनि ।
स्युरेवं तु पुनर्वै वेत्यवधारणवाचकाः ।
प्रागतीतार्थकं नूनमवश्यं निश्चये द्वयम् ।

---

4581. 1. A. वृषा for मृषा. 4582. BD. Prior half of the line is missing and reading in A is corrupt. 4589. 1. B. शश्वत्सनाक् च सनाक् ज्योक् च, D. शश्वत्सनाकंसनाकंज्योक for 4589a; 2. A. युगपद्येकृता सकृत् for 4589b. 4592. 1. A. परार्यैषमः for परार्यैषमाः.

असूयोप[१]गमेऽप्यस्तु विरतौ रञ्जने रुषः ।
अन्त[१]रेणान्तरा मध्येऽप्यहहाद्भुतखेदयोः ।
तु हि च स्म ह वै पादपूरणे पूजने स्वति ।
अहो चित्रेऽस्ति सत्तायां युक्ते स्थाने च सांप्रतम् ।
यथा[१] यद्वा[२] तथैवैवं[३] साम्ये स्याद्द्रुते शनैः ।
अकामानुमतौ कामं प्रायो भूम्नि नमो नतौ ।
नीचाह्वाने त्वरे रे च मालं मा[१] स्म च वारणे ।
नह्य[१] नो नाप्यभावेऽथ शीघ्रेऽरं स्वयमात्मना ।
पक्षान्तरे चेद्यदि चाभीक्ष्णं शश्वदनारते ।
बहिर्बाह्ये सना नित्ये स्मातीतेऽस्तमदर्शने ।
तूष्णीं मौने च तूष्णीकं प्रादुराविः प्रकाश्यके ।
अङ्गीकृतौ[१] स्यादथ किमप्यादि कथमित्यदः ।
अप्यर्थे यदिवार्थे स्यात् प्रसह्य प्रसभार्थके[१] ।
प्रकारेऽन्यथेतरथा कथमित्थं यथा तथा ।
उपरिष्टादुपर्यूर्ध्वे स्यादधस्तादवागधः ।

4599. 1. BD. om. l. 4599; A. reads आसायोप° for असूयोप 4600. 1 A. स्याद्न्तरान्तरमध्ये for 4600a 4603. 1. A. यदा for यथा; 2. BD. तद्वा for यद्वा; 3. A. तदैवैवं, BD. तथैवैव for तथैवैवं. 4605. 1. A. नास्म for मा स्म. 4606. 1. BD. नहि for नह्य. 4610. 1: A. अङ्गीकृते for अङ्गीकृतौ. 4611. 1. BD. प्रसह्यार्थके for प्रसभार्थके.

इति ह[1] स्यात् संप्रदाय ऊं[2] दुक्ते (उक्ते?) रोषसंभवे ।

इति ❀वत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे अव्ययाध्यायः❀❀ ॥



# ३४

## लिङ्गसंग्रहाध्यायः

नाम्नां पूर्वमिहोक्तानामनुक्तानां च कृत्स्नशः ।
सामान्यैर्लक्षणैः कैश्चित् क्रियते लिङ्गसंग्रहः ।
अबाधितेऽपि शेषोक्त्या भवेत्सामान्यलक्षणम् ।
आबन्ते ङ्यन्त[1] ऊङन्ते क्विबन्ते संपदादिके ।
क्त्यन्ते[1] तल्न्त ईदूतोरिदुतोश्चोभयोरिति[2] ।
नद्याः स्त्रीनामपर्याया[1] लतासौदामिनीभुवाम् ।
निशा[1]दिशाभयानाभिमनीषासरितामपि ।

---

4614. 1. D हि for ह; 2. BD. ऊन्द्रक्ते for ऊंदुक्ते ( ऊमुक्ते? ). ❀ A. om. वत्सकुल°····°विरचिते. ❀❀ After अव्ययाध्यायः BD add.-समाप्तः. BD end with this chapter. Ms. A is extremely corrupt and hence it is hardly possible to make head or tail out of this without the help of other mss. But unfortunately other mss. conclude with the previous chapter. 4618. 1. A reads. चंत ऊंदंते क्लीबंते which does not make any sense. Hence I have corrected it as ङ्यन्त ऊङन्ते क्विबन्ते. 4619. A. क्तन्ते has no meaning; could it be क्त्यन्ते ? 2. A दिति for रिति. 4620. 1. A. पर्याये for पर्यायाः. 4621. 1. A. निशां दिवाहयावभ्रि' for 4621a.

वीणाया झल्लिकायाश्च [1]सातितिस्रादयः स्त्रियाम् ।
तुटित्रुटिकटि[1]त्रोटिकुटिकोटिकरोटयः ।
गौल्यालिकुहलीपालीमधूलीधूलिकेलयः[1] ।
शिवमल्ली [1]भिल्लिचुल्ली वल्ली मल्ली मतल्ल्यपि ।
द[1]र्विर्वेदिः खनिः श्रोणिरश्रिरङ्गुलिरोषधिः ।
आर्तिः [1]कृत्तिश्छविश्छर्दिः कीर्तिर्जूर्त्यर्तिपूर्तयः ।
भ्रू[1]कुटिभ्रुकुटिप्रावृड्विप्रुड्रुट्तृट्त्विषः स्त्रियाम् ।
आगूयवागूवाक्स्रु(स्र?)क्त्वक्स्फि[1]ग्ज्योग्नौदिग्गृगुष्णिहः ।
संध्या कथा[शीः] कन्था द्वाः पूर्धूर्गी[विंट्] पिपीलिका ।
श्यैनंपाता च मृगया [1]तैलंपाता [स्वधेति दिक्] ।
वितण्डा धातकी [1]टीकासन्दी पण्डा च [2]पञ्जिका ।
सुरुङ्गा सूचिका श्रोणी पत्रिका गृहकारिका ।
झल्लरी [1]चर्चरी पारी हिक्का [का]कुः कुहेलिका ।
लाचा लिक्षाभंटी यूका द्रोणी [1]कम्बिर्द्रुणी भ्रमिः ।
त्रिफला रोचना भस्त्रा शम्या [1]प्रच्छर्दिका सिरा ।

---

4622. 1. A. सततिस्रादयः for साति°. 4623. 1. A. त्रोटीकुटित्क्रोटी for त्रोटि°. 4624. 1. A. धूलयः for केलयः. 4625. 1. A. भिल्ल for भिल्लि. 4626. 1. A. दुर्विर्वेदि for दर्विर्वेदिः. 4627. 1. A. कूर्तिः for कृत्तिः. 4628. 1. A भ्राकुटि भृकुटि for भ्रूकुटिभ्रुकुटि. 4629. 1. A. स्फिर्ध for स्फिग्ज्योग्. 4631. 1. A. तैलंपाताभिरादिके for 4631b. 4632. 1. A. कीटासन्दि for टीकासन्दी; 2. A. वञ्चिका for पञ्जिका. 4634. 1. A. चञ्चरी for चर्चरी. 4635. 1. A. कम्भिद्दणीभ्रमीः for कम्बिर्द्रुणी भ्रमिः. 4636. 1. A. वृश्छिर्दिका for प्रच्छर्दिका.

त्रियामिनित्रकठ्यन्ता[1] वृन्दार्थे खलगोरथाः ।
क्य[1]बन्ता ब्रह्महत्याद्याः अडन्ताश्च भिदादयः ।
अप्रत्यये जुगुप्साद्या [1]इञन्ताश्च वपादयः ।

इति स्त्रीलिङ्गप्रकरणम् ॥

आदन्ताः[1] पुंस्युपान्ताश्चेत् पर्युभुत्तीमधिस्वराः(?) ।
घञन्त[1]रात्रान्हाहान्ता गोत्रान्तचरणान्तकाः ।
अथुजन्ता[1] अबन्ताः स्युस्तथा चेमनिजन्तकाः ।
पथान्ता अपथं हित्वा[1] राजान्तास्तापसाभिधाः ।
पुंसि ब्रह्महरीशाख्या [देवाख्या] [1]देवतां विना ।
अप्पित्तवर्जमग्न्याख्या[1] अभ्रवर्जं घनाभिधाः ।
न्यूङ्खपुङ्खानुवाक्या(का?)र्थं र(य?)त्ननाडीव्रणा नरि[1] ।
तर्कसंपर्कगल्वर्कालर्कोदर्कार्कमर्कटाः ।
भर्गगर्गस्वर्गवर्गसर्गपुत्स(द्र?)लमुद्गराः
दारबल्बजलाजायु(सु?)प्राणाः पुंसि च भूम्नि च ।

इति पुंलिङ्गप्रकरणम् ।

---

4637. 1. A. स्त्रियामित्यत्र कल्यान्ता भृन्दार्थे for स्त्रिया°. 4638. 1. A. क्वान्ता ब्रह्महत्याद्याः सनन्ता ज्ञाततोंदिति for 4638. 4639. 1. A. अमन्ताश्च पवादयः for 4639 b. 4640. 1. A. this line is corrupt. 4641. 1. A. घंत्रंत for घञन्त. 4642. 1. A. आदुजन्ते स्तिबन्ता स्युः for 4642a. 4643. 1. A. पदान्ता अपदं हित्वा for 4643a. 4644. 1. A. देवता लिना for देवतां विना. 4645. 1. A. अप्वित्त (पित्त) वर्कमग्न्याख्या for 4645a. 4646. 1. A. नखिरी for नरि.

भावे ल्युडन्तनिष्ठान्ते शिरोबिन्दु(!) नपुंसकम् ।
समूहे काकबाकादि [1]फले त्वाश्वत्थमुख्यकम् ।
द्वन्द्वैकत्वाव्ययीभावौ [1]पथः संख्याव्ययात्परः ।
दृढादि ब्राह्मणाद्यं च ष्यञन्तं भावकर्मणोः ।
त्वान्तं षष्ठ्यां बहुत्वार्थे छाया [1]सान्तं च नोपधम् ।
प्रायशस्त्रोपधं[1]यान्तं लोपधं युक्तधो(सो?)पधम् ।
नामानि काञ्चनाब्जामपो[1] हित्वा जलाभिधाः ।
रक्षःसभं नृपसभं तथा दासीसभादि च ।

इति नपुंसकलिङ्गप्रकरणम् ॥



स्त्रीपुंसमुच्यते लिङ्गे शारिः श्रे[णिः] [1]सृणिर्मणिः ।
दशाटोटः पटो वाटो वटः पेठो मठः पटः ।
जूटो वराटः कर्कन्धूः शाल्मलिर्बलिडाडिमौ ।
मृत्युः कुम्भो भुजो बाहुर्ज्वालः कीलोऽशनिः फणः ।
कशेषुधी इषुः पूगकूपाणशफरादयः ।

इति स्त्रीपुंसप्रकरणम् ।

---

4651. I. A. फले त्वाह्वर्थमुख्यकम् for 4651b. 4652. I. A. पद: for पथः. 4654. I. A. स्मान्ते for सान्तं. 4655. I. A. प्रायशास्त्रेपशं for प्रायशस्त्रोपधं. 4656. I. A. आपो हूत्वा for अपो हित्वा. 4658. I. A. सृणीर्मणीः for सृणिर्मणिः.

वल्लूरः शकटी पात्री पेटी पीटकडाडिमौ ।
विभीतकी [1]वटी शाटी कवाटी मण्डली तटी ।
भल्लातक्यामलक्यौ च [1]स्फुलिङ्गः शलली त्रिषु ।

इतित्रिलिङ्गप्रकरणम् ।



अर्धर्चादि[1]गणे प्रोक्तं सर्वं नृक्लीबलिङ्गकम् ।
तद्दैवतादिकं[1] सर्वं पूर्वत्रै[व] प्रदर्शितम् ।
तत्र केचिद्भूतादीनां पुंस्त्वं वैदिकमूचिरे ।
पिशा[चा] दिषु भूतोऽस्त्री तिलकं च विशेषकम् ।
कमण्डलुः कालकूटो मधुः [1]सानुर्हलाहलः ।
इत्यादि सर्वं तद्रूपं तत्र तत्र प्रदर्शितम् ।

इतिनृषण्डलिङ्गप्रकरणम् ।



स्त्रीनपुंसकयोर्भावकर्मणोः [1]ष्यञ् क्वचिच्च वुञ् ।
तत्र वैदग्ध्यमौचित्यं वै[द]ग्धी चौचितीतिवत् ।
भावार्थे [1]योपधाद्वुञ् स्यात्तत्र साहायकादिकम् ।

इति नपुंसकप्रकरणम् ।



---

4664. 1. A. वटिशाटिकवाटि° for वटी शाटी कवाटी. 4665. 1. A. स्फुलिङ्गकशली त्रिषु for 4665b. 4666. 1. A. अर्धर्हादि for अर्धर्चादि. 4667. 1. A. तद्देवतादिकं for तद्दैवतादिकं. 4670. 1. A. स्वानुः for सानुः. 4672. 1. A. ष्यक्वचिच्चपु for ष्यञ् क्वचिच्च वुञ्. 4674. 1. A. योपधध्वस्या तत्र for योपधाद्वुञ् स्यात्तत्र.

4675 अभिनवबाणकृतोऽयं प्रस्फुटलिङ्गः प्रसन्नपदनामा ।
तिनिन्ये(!) निघण्टुतिलकः कविपरिषत्कण्ठभूषणं भूयात् ।

इति श्रीवत्सकुलवामनभट्टबाणविरचिते शब्दरत्नाकरे

[ लिङ्गसंग्रहाध्यायः ॥ ]

॥ इति शब्दरत्नाकरः समाप्तः ॥



## ABBRIVIATIONS

| | |
|---|---|
| AK. | Amarakośa. |
| KS | Kāmasūtra. |
| MW | Monier Williams Sanskrit Dctionary. |
| NR | Nānārtharatnamālā. |
| NŚ | Nāṭyaśāstra. |
| ŚR | Śabdaratnākara. |
| ŚS | Śabdasamanvaya Kośa. |

# CRITICAL NOTES.

Lines

52 After stating "तस्यावताराः मत्स्याद्याः सर्वे तत्तत्समाह्वाः ।" the ŚR. leaves out the names of मत्स्य and कूर्म but gives those of वराह, नृसिंह and परशुराम and then after some interval, of कृष्ण too.

174 काषेय, कार्षेय or कौषेघ (or even कौषेय) is found in no other lexicons as a synonym of यक्ष. A reads कौषेघ while C कार्षेय. The reading from BD has been accepted.

198 छागर and तरक्ष are found in no other lexicons.

199 The metre is faulty as the second पाद is short of three मात्राs. The पाद if read as: '°स्तुषवह्नौ मुर्मुरः कुकूलश्च', would be metrically correct but no MS. supports th's alteration.

282 आशु as a synonym of शृङ्गीकनक is not found elsewhere

287 All the MSS. read बङ्क or पङ्क and none वङ्क. Nevertheless the latter has been adopted in consultation with other lexicons.

303 चिराशा=the south-east quarter. This word is not found in other lexicons.

334 It is not clear whether "शुक्रा माष्व्यः शाकर्याः" are the respective epithets or the synonyms of रुद्रा विश्वभृतः ककुभाः of the previous line,

403 All the MSS. have काश्यप° for कश्यप° which is wrong. Hence कश्यप° has been adopted in the text. The metre is defective but can be im-

Lines

proved to some extent if कश्यप° is read: कश्यपस्य.

439 BC read तूत्थन°, D. तूच्छन° and A तूद्धनु°. The text appears to be corrupt in all the MSS. and makes no sense. The BC reading has been, however, adopted.

447 खरक is not found in other lexicons in this sense.

459 प्रभात in ŚR is masculine but neutral in all other lexicons.

465 मैथिल, in the sense of प्रदोष (=evening) is not found elsewhere.

484 अग्णि or इग्णि (स्यादपरस्त्वग्णिः or °स्त्विग्णिः) meaning the fortnight (पक्ष) with waxing तिथिs is not met with elsewhere.

514 युगासार in the sense of three *yugas*, and व्यायोग in the sense of two *yugas* are not found in other lexicons.

547 हेतुरर्थ उपाधिवत् appears to be corrupt. उपाधि cannot be a synonym of हेतु although अर्थ may have that implication too. If the text was उपाधितः instead of उपाधिवत् it may mean tnat अर्थ under certain condition means हेतु. As no MS supports this alteration उपाधिवत् has been retained.

612 All the MSS read °निर्लयिनी which is wrong. Hence correct reading has been adopted.

662 All the MSS read गण्डक. But the word listed in AK and other lexicons is गडक (Cf गडकः शकलार्भकः। AK वारिवर्ग, 17). Therefore गण्डक appears to be corrupt.

840 No MS gives the reading त्रपुसं. But as सीस and त्रपु are once mentioned in lines, 840 and 841

Lines

respectively, त्रपु सीसं of A or even त्रपुसीनं of C is obiously corrupt. Hence correction has been made in the text as त्रपुसं च.

857 All the MSS read गण्डरस for गन्धरस. It may be a scribe's mistake as ण्ड and न्ध closely resemble in Grantha and Telugu scripts. As all the MSS have this corrupt reading it may be inferred that these MSS were transcribed from a common MS. The term found in all other lexicons is only गन्धरस.

884 All the MSS read चल्लय: but the actual term found elsewhere is छल्लि ( Sg.). चल्लि may, therefore, be a corrupt reading.

917 All the MSS read अर्जुनश्च. But, as this term occurs in the previous line too as the synonym of the same tree, it obviously appears to be an error.

1030 पल्कणस्तु श्ववामन: appears to be corrupt. All four MSS give diffrent readings and no other lexicon records these vocables. The meaning in Tamil given in the Tanjore MS is "पावडै".

1073 All the MSS read गलूची for गुडूची. Hence the reading has been retained.

1077 The name of the plant which the vocables in the line signify is not known; further the post-half differs in each MS.

1228 The names of विद्रुमवल्लरी, a fragrant plant, are repeated again in lines 1240 and 1241 with the only change of विद्रुमवल्लिका for विद्रुमवल्लरी. This repetition is found in all the MSS which again

Lines

goes to support the assumption of at least not a very distant common origin of these MSS.

1234 The synonyms of the egg-plant and its varieties are listed in lines 1276—1280. Therefore they seem to be out of place here. According to the notes on A these are the names of a smaller variety of egg-plant (—Śiru viLitilai; viLitilai=a kind of egg-plant). This and the following line, though not contiguous, are found without any change in AK too. And there वार्ताकी हिङ्गुली etc, are listed among the synonyms of the egg-plant. Because this line is recorded in all the MSS and also because we meet with similar repetition elsewhere too in ŚR, we have, however, retained it in the text taking the vocables for the synomyms of a smaller variety of egg-plant as noted in A.

1334 शाद्वल is said to mean तृणाङ्कुर. But the vocable actually means a place abounding in शाद, the fresh grass. Therefore तृणाङ्कुरे appears to be a corrupt reading for तृणावृते. But all the MSS read only तृणाङ्कुर.

1405 प्रतिमान means 'the part of an elephant's head between the frontal globes', according to मेदिनी (cf. प्रतिमानं प्रतिच्छायागजकुम्भान्तरालयोः । मेदिनी, नान्तवर्ग, 93.), and 'the part of an elephant's head between the tusks', according to NR (cf. प्रतिमानं प्रतिच्छाया-गजदन्तान्तरालयोः । NR. 2212), ŚS and others. But ŚR says 'प्रतिमानं तु कुम्भयोः । अधो भागे ..'. Here अधोभागे is evidently a mistake for अन्तराले, for there is a vocable आरत्न (cf. आरत्नोऽधः कुम्भयोः...

Lines

1401 ) already explained just a few lines before. आरत्न too, means, according to this, 'the part of an elephant's head below the frontal globes.' Therefore, if we retain अधोभागे here, प्रतिमान too would mean the same thing.

1436 गण्डूषिक, बंहिष्कर्ष, सुभाग and अतिहस्तिक are found in no other lexicons. They all seem to be synonyms of गण्डूषिक which may mean an elephant with prominent tip of the trunk or an elephant spraying water with his trunk. Since the text gives no clue as to the meaning of these vocables, they have been left in the Index with question marks.

1476 वक्त्रपट्टकं according to some means 'the food-receptacle or bag conaining corn etc , tied round the head of a horse', and according to others 'the strap or string tied on a horse's breast'. But ŚR has got two different vocables viz, प्ररोहक and भुक्काण, both meaning 'the food-bag tied round the head of a horse' ("..... अथ प्ररोहकः । भुक्काणोऽशनभस्त्रायाम्... ।" ) listed in the very next two lines (1477–78), just after the synonyms of वक्त्रपट्टक. Hence it is obvious that वक्त्रपट्टक and its synonyms तलसारक and तालिका separated by अथ cannot mean अशनभस्त्रा, the food-bag of a horse. It should plainly mean 'a fillet or ribbon tied round the head as ornment', and not उरःपट्टिका or वक्षःस्थलबन्धनरज्जु as mentioned in शब्दकल्पद्रुम (*see* under तलसारक.)

1520 The text appears to be corrupt.

1639 AK reads वर्वणा for चर्वणा (vide AK. सिंहादिवर्ग, 2 ).

Lines

1641 हालाहलस्त्वञ्जलिका. According to the other lexicons and MW हालाहल means a kind of lizard or spider and अञ्जनिका a young mouse or a species of lizard. But in ŚR they are synonyms and mean a species of bee as it is evident from the text. From the name हालाहल, it appears to be a poisonous veriety and hence in the Index the meaning is given as 'a kind of poisonous bee.'

1659 According to AK समाज is the multiude of beings other than animals and there it is निकाय which is the multitude of persons practising similar duties ( cf "पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम् । स्यान्निकायः······ ।" सिंहादिवर्गः, 43. ).

1683 A reads ···निशान्तमोकः शरणमगारनिशान्तधामवस्त्यम्

B ,, .. नितान्त° ... ... नितान्त° ... ... ।

C ,, .. निशान्त° ... ... निवसथावस्त्यम् ।

D ,, .. नितान्त° ... ... निशान्त°... ... ।

Here in the first half AC have निशान्त while BD नितान्त°. In the second half AD have निशान्त ( A repeats निशान्त twice, once in the first half and once in the post half ); B repeats नितान्त as A does निशान्त and C has निवसथ instead. नितान्त in BD in the first half appears to be a later correction to save repetition of निशान्त, but B curiously enongh repeated नितान्त in the latter half in place of निशान्त too. Whenever there are variants AC normally differ from BD and sometimes even errors are inherited by these respective groups. This indicates that AC and BD were copied from two different manuscripts. The reading in the first half seems to have been tampered with in

Lines

all the MSS. In the latter half this appears to have happened only in case of BC. We have, therefore, retained निशान्त in the post half as this reading is found in A and D, the two MSS. copied from two different sources. As regards निशान्त of AC and नितान्त of BD in the first half, we believe they were corrections made by the scribes independently for obvious reasons. Wherever a reading is not decipherable or doubtful A underlines such readings. In the present case A has underlined the first निशान्त. Obviously the scribe was not sure of its correctness. ŚR in line 1685 says that among the vocables aforesaid (i. e. those in line 1683 or 1684) आवसथ (l. 1684) and निकेत (l. 1683 ) are, according to some, masculine ( केचिदावसथं पुंसि निकेतं च प्रचक्षते । l. 1685). But the vocable निकेत, which according to ŚR's own reference must have been cited in the foregone lines, is not found either in l. 1683 or in l. 1684. Obviously in l. 1683 निशान्त in AC and नितान्त in BD was later added in place of निकेत by the scribes. We have, therefore, adopted निकेत in this place.

1701 कायमानं, according to lexicons, means grass or a thatched hut, and उपकार्या or उपकारिका means a royal residence, a tent or a granary. In ŚR these three vocables seem to have been listed as synonyms. I have, therefore, taken them to mean a temporary hut or shed as there are vocables listed separately for royal residence in l. 1693, its varieties in ll. 1722-23, for tent in l. 1735, and for granary in l. 1747.

Lines

1702 आवलीभंट्टगेहाली…. These two terms are not found in other lexicons and what they sighify is also not clear.

1770 चल्लण is given as a synonym of कक्ष्या, an under-wear. This vocable is found in no other lexicons and seems to be of non-Sanskritic origin. In Kannada चल्लण means a pant or a trouser. But there too it appears to be a loan-word.

1894 All the MSS read मुखं संध्यादिपञ्चकम्। which is evidently wrong. The reading ought to have been either मुखसंध्यादि पञ्चकम् or मुखाद्याः पञ्च संधयः। We have adopted the former reading in the text.

1912–13. ŚR mentions nine रस^s by name (vide ll. 1908–1809) but mentions only eight स्थायिभाव^s by omitting the स्थायिभाव of शान्त.

1916–17. ŚR makes up the number of संचारिभाव^s thirty-three by adding प्रीति (l. 1916a) in place of विबोध of NŚ It also adds ईर्ष्या for औत्सुक्य (l. 1916b) and reads तर्क for वितर्क and वेग for आवेग. The last two variants have been apparently adopted with a view to suit the metre for they signify no change in the meaning.

1922 आमय is superfluous here for the word गद occurs again at the end. In the NŚ स्पर्श is given as one of the causes for horripilation. In A we have विषरंवि in place of विषामय with a line under रंवि indicating that the reading is wrong. All the other MSS read विषामय. Can it be विषस्पर्श ?

1929 महीत्यश्रु appears to be corrupt. The readings in all the MSS are equally corrupt and make no sense.

Lines

1974 घट्टितक. ABD स्फटितक, C स्फुरितक for घट्टितक. The reading in all the MSS are worng. The kisses to be practised on a young and unexperienced wife (कन्या or मुग्धा) are, according to KS, of three kinds, viz. निमितक, स्फुरितक and घट्टितक ( निमितकं स्फुरितकं घट्टितकमिति त्रीणि कन्याचुम्बनानि। KS. 2.3.9). The ŚR, after describing these three kinds, observes: कन्यायां त्रितयं चरेत्। If the reading of any of the MSS was accepted, there will not be three names but only two with स्फुरितक (or स्फुटितक) twice described in two difefrent ways. The ŚR while first listing the names of different kinds of kisses leaves out घट्टितक, शायिकाचुम्बन ( defined in l. 1990 ) and छायाचुम्बन ( defined in l. 1992 ). Being misled by the omission of घट्टितक in the list the scribes might have wrongly replaced it by स्फुटितक (or स्फुरितक). We have, therefore, after contulting the KS adopted घट्टितक in the text.

2011 The नखक्षति° ( finger-nail scratches ) inflicted on each other by the sporting couple are, as described in the KS, only eight ( तदाच्छुरितकमर्धचन्द्रो मण्डलं रेखा व्याघ्रनखं मयूरपदकं शशप्लुतकमुत्पलपत्रकमिति रूपतोऽष्टविकल्पम्॥ KS. 2. 4. 4.). But to this, if स्मारणीयक ( as said in KS ) or स्मारक ( as said in ŚR ), a kind of नखक्षति, which is inflicted by the temporarily parting husband on the mon veneris, the breasts or the thighs of his wife for her remembrance till his return from abroad, is added, the नखक्षति° can become nine. The word नवधा, as read by all the MSS, makes no sense and it should be नवमं if it applies to स्मारक, which is the नखक्षति

Lines

inflicted by the husband on his wife on one special occasion only. Hence it cannot be included among the common नखक्षतिs which can be inflicted by the sporting couple any time. But if at all this also (स्मारक) is added to the eight, the स्मारक may become the ninth नखक्षति. This is what exactly स्यात्तु नवमं means. I have, therefore, adopted नवमं in the text in place of नवधा. Further नवधा, if retained, cannot go with दन्तक्षतिs which are described immediately after in the line, for they too according to KS as well as to ŚR only eight.

The eight दन्तक्षतिs described in the KS begin with गूढक ( गूढकमुच्छूनकं बिन्दुर्बिन्दुमाला प्रवालमणिर्मणिमाला खण्डाभ्रकं वराहचर्वितकमिति दशनच्छेदनविकल्पाः ।। KS. 2. 5. 4). But we do not find this in ŚR. There; the names of the eight kinds of दन्तक्षतिs are not first listed, as it is usually done, and immediately after दन्तानां कर्म नर्मजम् ।, we get, अधरे वामगण्डे वा तदेवातिनिपीडनात् । किंचिदुन्नतमुच्छूनं... ।. There it is very clear that some lines first counting the names of different kinds of दन्तकर्मs and then describing गूढक, the first kind of them, are deleted by oversight by all the scribes. This again shows a distant common origin for all the four MSS. तदेव evidently refers to गूढक of previous line which, when it is more deeply and clearly inflicted on the lower lip or the left cheek, is called उच्छूच्न. गूढक is the दन्तक्षति which is vaguely visible through the thin fading red line as it is understood from the KS where it is described as: नातिलोहितेन रागमात्रेण विभावनीयं गूढकम् ।। KS. 2. 5. 5.

Lines

From this it is clear that some lines between 2011—2012 are deleted in all the MSS.

2031 ŚR has included भ्रुकुटि and भ्रृकुटि among the synonyms of प्रमीला, lassitude. According to other lexicons भ्रुकुटि means contracting the brows in rage, anxiety etc. In AK these words are cited immediately after the synonyms for lassitude without the conventional terms, अथ or तु, which imply seperation of the preceding word from the following (तन्द्री प्रमीला भ्रकुटिर्भ्रुकुटिर्भ्रृकुटिः स्त्रियाम्. AK. 6. ?8 ). The author might have confounded भ्रुकुटि and भ्रृकुटि in AK as the synonyms of तन्द्री and followed it in SR where तु makes it definite that प्रमीला and the following vocables are synonymous,— " प्रमीला तु भ्रुकुटिभ्रृकुटी स्त्रियौ। तन्द्री तन्द्रा च कम्पस्तु वेपो···(I. 2031—2032.). (SR closely follows AK and there are in the former a number of lines which are identical with those in the latter)

2040 कुहना त्वव्यये. Here अव्यये appears to be a wrong reading. कुहना is not an indeclinable and no lexicon records it as such. Assuming it to be an indeclinable, the text should be त्वव्ययं and not त्वव्यये. The locative shows that it gives the meaning of कुहना and hence the text त्वव्यये should be corrupt.

2065-2070 The names of women of particular description are separated in AK ( vide. विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना। AK. 6. 2–4. ), whereas in SR they appear to have been cited just as the common names for woman without any distinction.

2106. All the MSS read आचार्याणी for अर्यार्याणी which

Lines

is wrong. आचार्याणी with cerebral -णी may here be grammatically correct for cerebralization of-नी in आचार्यानी is prohibited only in पुंयोग ( आचार्यादाणत्वं च । Vārtika ). The lines 2105–6 list seven terminologies for women of four respctive professions and castes, and these vocables are formed only on the basis of 'their caste or profession and not on the authority of their conjugal relationship. If we had retained आचार्याणी on the strength of readings found in the MSS, we would have had only six terminologies instead of seven, whereas SR expressly says सप्त पुंयोगवर्जिताः. I have, therefore, adopted अर्यार्याणी in place of आचार्याणी in the text.

2180 The first half of this line is worng or corrupt in all the MSS. A is short of one syllable and reads [—]शीर्षण्यशिरस्यौ द्वौ. BD insert ई intervocally between—र्ष—in शीर्षण्य and make it शिरीषण्य, thus making up the loss of one syllable. C adds तु between शीर्षण्य and शिरस्य but makes both dual, as शिर्षण्यौ तु शिरस्यौ द्वौ, which is also equally gratuitous. From all this the effort of the respective scribes to rectify the metre by adding one more syllable becomes very obvious. I have, therefore, corrected the reading by initially adding यौ in bracket which, while setting the metre right, renders the meaning of the verse acceptable.

2275 The second half of this line seems to be out of place and makes no sense. C takes this half to the previous line and reads: सुतो मातृष्वसुश्चैवं कृपा कन्या त्वलंकृता । अमृते जारजः कुण्डो मृते भर्तरि

